Digitized by Sarayu Trust Foundation Delhi and eGangotri.



॥श्री काशीजी में महल्ला आदिविश्वेश्वर पर पंडित दुर्गा प्रसाद जी कटारे परलोकस्थ के पुत्र पंडित कामता
प्रसाद जी कटारे के गणेश यन्त्रालय में विवाह वृन्दावन टीका संयुक्त छापी गई लिखा छाकु॰ रघुराम छा
पनेवाला सिवचरन जिसे लेना होय उसे चांदनी चौक में पंडित कामता प्रसाद जी कटारे के दुकान पर मिलैगी

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

वि॰ वृ॰ ॥श्रीगणेशाय नमः॥ अथ विवाहवृंदावनं सव्याख्यानं लिख्यते तीर्थानामधिपः कुभृच्छिन्नपदो संत्यक्तवेलास्थितिर्यस्यायो भ॰
टी॰ सकलद्विजाधिपसमीक्षाक्षोभरुक्स्फूर्भूतलक्ष्मीशोऽखिलदानवारिसननप्रस्निग्धसद्मक्षितिर्घोषध्वस्तमलो जयत्युरुकृपासिं- १
२ धुर्गुरुः केशवः १ अर्थे चतुष्टयवाची तत्र प्रथमं गुरुपक्षे केशवो गुरुर्जयति सर्वोत्कर्षेणावर्तते गृणात्युपदिशति शास्त्राणि।
ति गुरुः तमेव सर्वोत्कर्षं द्योतयति तीर्थानामधिप इत्यादिविशेषणैः तीर्थो ध्वरे गुरौ मार्ग इत्यभिधानात् तीर्थानां गुरूणामधि-
पः महागुरुरित्यर्थः तल्लक्षणमाह स्मृतिः पिता पुत्रमुत्पाद्य संस्कृत्य वेदान्वेदार्थाश्च ग्राहयित्वा वृत्तिं कल्पयति स महागुरु-
र्भवतीति यद्वा तीर्थानां गंगादीनामधिपः सर्वतीर्थमयो गुरुरिति स्मृतेः कुभृच्छिन्नपदः कुभृतो राजानः तैः श्रितं सेवितं प-
दं यस्यासौ तथा असंत्यक्तवेलास्थितिः न संत्यक्ता वेलासु पूर्वाह्णादिकालेषु स्थितिर्विहिताचारो येनासौ तथा यस्यायो सकल-
द्विजाधिपसमीक्षाक्षोभरुक्स्फूर्भूत् यस्मान्नयाः शस्ताः कलाः पठनाद्यास्ते यस्य यो सकलाः ते च ते द्विजाधिपा विप्रश्रे-
ष्ठास्तेषां समीक्षा संदर्शनं तया क्षोभासामासारुकः अधिकामुद्दर्पः तस्य पूरकं विभर्तीति तथा लक्ष्मीशः पशुधान्यादिधनवान्।
यद्वा लक्ष्मीनाम्नी मम जननी तस्या ईशः पतिः अखिलदानवारिसननप्रस्निग्धसद्मक्षितिः अखिलानि अनेकानि च तानि दाना- रा॰
नि च तेषां वारि उदकं तेन सननं तमनवरतं प्रस्निग्धा प्रकर्षेणार्द्रा सद्मक्षितिर्गृहभूमिर्यस्यासौ तथा घोषध्वस्तमलः घोषेणाध्य- १
यनादिघोषश्रवणेन ध्वस्तो मलः पापं येन स तथा जनानामिति शेषः उरुकृपासिंधुः उरुः पृथुर्या कृपा तस्याः सिंधुः कृपासा-
गरः अथ समुद्रपक्षे कथंभूतः सिंधुः तीर्थानामधिपस्तीर्थराजः कुभृच्छिन्नपदः कुभृतः पर्वताः मैनाकादयः तैः श्रितमा-

Digitized by Sarayu Trust Foundation Delhi and eGangotri.
CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

श्रितं पदं स्थानं यस्यासौ तथा पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्यभिधानात् असंत्यक्तवेलास्थितिः वेलासमुद्रतीरं
तस्याः स्थितिर्मर्यादा असंत्यक्ता वेलास्थितिर्येन सस्तथा यद्दित्यक्ष्यं यत् यदा काले पर्याप्तकलः परिपूर्णकलो द्विजाधिप
श्चन्द्रस्तस्य समीक्षा सम्यगुदयः तेन आसामासाद्गुरुरधिकतरा समुद्रर्मिर्येन सस्तथा तदापूरभूज्जलपूरभूत्स्यात् चन्द्रोदये हि समु
द्रस्य जलभरः अत्रापि पूर्णचन्द्रोदये अधिकपूर इति भावः लक्ष्मीशः लक्ष्म्या ईशः पतिः अखिलदानवारिसततप्रस्निग्धसत्
त्क्षितिः अखिलादानवारयो देवाः तैः सततं प्रस्निग्धा शोभमाना सत्क्षितिः स्थानभूमिर्यस्यासौ तथा यस्य स्थाने विपावादिदेवा नियसंती
त्यर्थः घोषध्वस्तमलः घोषेणगजेनेन ध्वस्तः मलः पातकं येन सस्तथा सुग्रीवसफलजन्म ये वसन्ति महोदधौ अहन्यहनि घोषेण बद्ध
हत्या विलीयत इति पुराणात् अथ विष्णुपक्षे केशवो नारायणो जयति गुरुः उद्धवार्जुनादीनां ज्ञानोपदेष्टा गीर्वाणानामधिपः गंगादीनां
तत्त्वादज्ञत्वात् कुभृच्छिन्नपदः कुभृद्धरणीधरः शेषः तत्र श्रितं पदं यस्य सस्तथा शेषशायीत्यर्थः असंत्यक्तवेलास्थितिः असंत्यक्ता वे
लायां समुद्रतीरे द्वारकायां स्थितिर्निवसतिर्येनासौ तथा यस्य सर्वासकलद्विजाधिपसमीक्षासदुद्भूतपूरभूत् यस्मात्सर्वास्ताः शौर्यादिक
लायेन सः यस्य सर्वाः सकलाः द्विजाः पक्षिणस्तदधिपो गरुडः यस्य सर्वा सकलश्चासौ द्विजाधिपश्च तस्य समीक्षा संदर्शनं तया असावगुरुर्मे
हन्तीमुहूर्षस्तस्याः पूरणं बिभर्तीति तथा लक्ष्मीशो लक्ष्मीपतिः अखिलदानवारिसततप्रस्निग्धसत्क्षितिः दानवारि दंतिनां म
दजलं तेन सततं प्रस्निग्धा आर्द्रीकृता अखिला समग्रा दानवारि सततप्रस्निग्धा सत्क्षितिर्गृहाङ्गणभूमिर्यस्यासौ तथा कंसरामाव
तारे यस्य गृहाङ्गणभूमिरेवंविधेति पुराणप्रसिद्धा घोषध्वस्तमलः घोषाणां व्रजस्थितगोपादीनां ध्वस्तः मलो येनासौ तथा कृष्णाव

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

वि॰ सं॰ नारेमप्रसिद्धमिदं उरुकृपासिंधुः महासत्वगुणत्वात् अथसूर्यपक्षे केशवः सूर्यः केशाः रश्मयः प्रशस्ताः केशायस्यासौ केश
टी॰ वः केशाद्वोन्यतरस्यामिति प्रशंसायां मत्वर्थे वः कथंभूतः केशवः गुरुः रोमकमयासुरादीनां ज्योतिःशास्त्रादिज्ञानोपदेष्टा अ
२ त एव तीर्थानामधिपः तीर्थानां ज्योतिःशास्त्रादीनां अधिपः प्रवर्तकः तीर्थं शास्त्राध्वरक्षेत्रेष्वित्यभिधानात् कुभृच्छ्रित
पदः कुभृदुदयाचलः तत्र श्रितं पदं येन तथा उदयशिखरिशृंगस्वर्णसिंहासनस्थ इत्युक्तः असंख्यकवेलास्थितिः वेलाका
लः तस्य स्थितिर्विसरः दिनादिनियमः असंख्यकावेलास्थितिर्येनासौ तथा यस्त्वयी सकलद्विजाधिपसमीक्षाकर्त्री आसीकमूत्सूरभूत्स्या
त् यस्मात्सूर्यात्त्वयी ताः मासाः कलायेनासौ यत्त्वयी सकलः स चासौ द्विजाधिपश्चंद्रस्तस्य समीक्षा संदर्शनं चंद्रस्य प्रतिदिनकलावृद्धिः
क्षयश्च सूर्यकिरणसंसर्गाद्भवति इति ग्रहगणितेवासनाप्रसिद्धा आशास्तहर्षनलालसाः तेषां ऊरुमुस्सूरः महाहर्षभरत्वं विभर्ति पु
ष्णातीति तथा लक्ष्मीशाः लक्ष्म्यो दीप्तयः तासामीशः अखिलतेजसाधीशः दानवारितततप्रक्लिग्धसुप्रक्षितिः अखिलाश्चते दा
नवारयश्च इंद्रादि देवाः तैः सततं प्रक्लिग्धा शोभमाना सद्मक्षितिः स्थानभूमिर्यस्यासौ तथा इंद्रादि देवैः सेवित इतितात्पर्यार्थः।
घोषध्वस्तमलः घोषेण नामगर्जनेन ध्वस्तो मलः येनासौ तथा उरुकृपासिंधुः महाकृपासागरः स्थावरजंगमजगत इति शेषः राम॰
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इत्याद्युक्तेः इत्येतेष्वदुदितश्लोकस्यार्थाः अथ प्रकृतं वध्नाति स्मविवाहपूर्वकपदं वृंदा। २
वनं केशवादिस्तोयत्कुटिलोक्तियुक्ति बहुलं बद्धथे गूढपदैः हेत्वागमप्रमनस्वहृष्टसुधियां तत्रेतरेषां तथा तस्मान्न हितमिति विशेष
सहितामारब्धुमस्मु स्तुकः २ नानाकलागमपटुर्भुविगीतकीर्तिः श्रीकेशवस्य तनयः कुरुतेगणेशः टीकाम्भमाधनमस्ता।

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

पहरंविवाहवृंदावनस्यकरपीडनदीपिकाख्यां ३ आरभ्यमानेग्रन्थेत्र्ययेके चोद्यावचारूह मुनिमंतस्तुसद्युक्तिविशेषरचने
रपि ४ कृत्वादौगृहलाघवारम्भकरणंतिथ्यादिसिद्धिद्वयं श्लोकैः आद्यविधिंसवासनतयालीलावतीव्याकृतिं समवेक्ष्यमुहू
र्तनत्वनिवृत्तिंपर्वादिसत्तुनिर्णयंतस्मान्मंगलनिर्णयाद्यथयकृतावैवाहसद्दीपिका ५ श्रीभरद्वाजमुनिश्रेष्ठवंशोद्भवश्रौदी
च्य ज्ञातिमंडनः सकलागमाचार्यवर्योज्योतिर्विस्कुलावतंसोनेककलाकलापचतुरः श्रीदैवज्ञरामगणनपः श्रीकेशवार्कैः
करणः केवीरवाद्युक्तानिजांसत्कविनाविशेषरचनासमेतांवाक्यविचारचातुरींदर्शयन्संक्षिताल्पंग्रंथेकदेशभूतविवाह

श्रीशार्ङ्गिणोः स जनतुवो नवसन्निवेशः श्लेषश्च्यपंचलवलन्नयनांचलश्रीयश्मांचलग्रथनमंगल
माचचारशृंगारहारमणिकौस्तुभरश्मिगुंफः १ ॥

पवलचिकीर्षुर्जन्मजन्मांतरार्जितदुरितोत्पन्नमत्यूहनिरासे
नग्रंथसमाप्त्यर्थंसमासेपिग्रंथेनस्वरचितयार्थांशिष्टाचारपरिपालनेनशिष्यशिक्षार्थंचआशीर्लक्षणंमंगलमाचरन् श्रीलक्ष्मी
नारायणयोर्विवाहलक्षणंमध्यमसंनिवेशंनवसंतिलकवृत्तेनवर्णयति श्रीशार्ङ्गिणोरिति अयंतेविश्वमेतांसाश्रीः शार्ङ्गीयस्या
स्तौतिशार्ङ्गिणोस्तयोर्लक्ष्मीनारायणयोः सनवसन्निवेशः नवसंगमः संनिवेशस्तुसंस्थानप्रवेशेसंगमेपिचेत्यभिधानात् वः युष्मा
कं श्लेशाश्रयंसजनुकालितस्याशीः नवसंनिवेशजानिविशेषणान्याहारेणाह चलवलन्निति चलन्तौचलौवलन्तौवलनौस्या
नान्तरगमनंचलनंतस्मात्परावर्तनंवलनंचलाश्चवलंतश्चचलवलंतः नयनानामंचलाः प्रांतानयनांचलाः चलवलंतश्चतेन

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि·वृं·
टी·
३

यनांचलाश्च चलवलन्नयनांचलास्तेषां श्रीशोभा यस्मिन्नवसंनिवेशे सतथा समासांतविधेरनित्यत्वान्न कप्प्रत्ययाभावः सानुरागपरस्प रावलोकनेन नयनांचलौ चंचलौ वलंतौ चेत्निजातिः लज्जाकुलनयानयनांचलाभ्यामेवावलोकनं युक्तं स कः यत्र नवसंनिवेशे शृंगारहा रमणिकौस्तुभरश्मिगुंफः अंचलग्रथनमंगलमाचचार आचीर्णवान् शृंगारस्य हारः शृंगारहारः तस्य मणिः शृंगारहारमणिः स च कौ स्तुभश्च शृंगारहारमणिकौस्तुभौ तयोः रश्मयस्तेषां गुंफः गुंफ ग्रथने गुंफनं गुंफः ग्रथनमिति यावत् अंचलयोर्ग्रथनं तदेव मंगलं अंच लग्रथनमंगलं श्रियः शृंगारहारमणिः शार्ङ्गिणस्तु कौस्तुभः तद्रश्मीनां परस्परं ग्रथनं अंचलग्रथनभावं प्रापेत्यर्थः विवाहस मये वधूवरप्रावृतवस्त्रांचलग्रथनं मंगलत्वेन क्रियत इति शिष्टसमाचारः स तु प्रागेव शृंगारहारमणिकौस्तुभरश्मि

संवर्ग्ये गर्गभृगुभागुरिरैभ्यगीर्भ्यः सारं वराहमिहिरादिमतानुसारं ॥

गुंफनेनैव निष्पन्न इति भावः अत्र मंगलार्थं गणादिदोषनिरासार्थं वा आदौ श्रीशब्दप्रयोगः तदुक्तं देवतावाचकाः शब्दा ये च भद्रा दिवाचकाः ते सर्वे नैव निंद्याः स्युर्लिपितो गणतोपि वेति यथा श्रियः कुरूणामधिपस्य इत्यादौ १ अथास्य ग्रंथस्य आर्षमूलत्वे न प्रामाण्यं तथा प्राचीनग्रंथेभ्यो वैशिष्ट्यं द्योतयन् संबंधादिचतुष्टयगर्भं तदारंभहेतुं वसंततिलकयाऽऽह संवर्ग्ये इति अ हं विवाहवृंदावनं नाम ग्रंथं विरचयामि अन्वर्थं नाम विवाह एव विवाहः स्त्रीपुरुषसमागमलक्षणः तदर्थं वृंदावनमिव वृंदावनं विवाहवृंदावनं कस्मात् हि तत्र गोपीभिः सह परस्परपाणिधारणपूर्वकं रासक्रीडादिकं कृतवान् अन्योपि सूरसे

राम·
३

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

नसुषेणाद्यः वृंदावनंनामवनंयमुनातीरेप्रसिद्धंयद्वाविवाहानांवृंदं विवाहवृंदंतद्वनीति विवाहवृंदावनं अत्रहिसम्यक्सदसत्फ
लनिरूपणेनअसत्समयपरित्यागात्समयविवाहकरणेनपुत्राद्यभिवृद्धिद्वाराविवाहावनत्वयुक्तमस्यग्रंथस्यकथंभूतंविवाहवृंदावनं
स्फारत्स्फुरत्परिमलाढ्यफलंस्फारंनितानिस्फारंनितिविस्तृतानिस्फुरत्स्फूर्जोस्फुरंत्तितानिस्फुरंतिविकसमानानिपरिणतोमलपरिम
लःदोषाभावःकुगनिमादयश्चेतितत्पुरुषःतेनाढ्यानिपरिमलाढ्यानि स्फारंनिस्फुरंतिपरिमलाढ्यानिफलानिनक्षत्रफलादीनियस्मि
स्मिंस्तथापुनः कीदृशंविचाररम्यंनानाविधविरुद्धमुनिवाक्यानांपूर्वपक्षसिद्धांतरूपसारासारविचारेणरम्यं किंकृत्वागर्गादिगी

॥स्फारत्स्फुरत्परिमलाढ्यफलंविवाहवृंदावनंविरचयामिविचाररम्यं २॥

र्भ्यःसारंसंवर्ग्यगर्गादयोयवनमित्रपुलस्त्यादीनामुपलक्षणं तेषामप्यत्रमतोपन्यासदर्शनात्गर्गादीनांगिरःवचनानितेभ्यःए
कदेशीयादिवाक्यपरित्यागेनबहुमतस्वीकारात्मकंसारंसंवर्ग्यमेलयित्वानकेवलंसमत्वेनैवसारंसंवर्गितं किंतुवराहमिहिरा
दिमतानुसारं आदिशब्देनलल्लश्रीपतिश्रीधरादीनांग्रहणं वराहमिहिरादीनांमतमनुसरतीतितथागर्गादिवाक्यानांसारासा
रपर्यालोचनयावराहादिमतानुसारंविचार्यविरचयामीत्यर्थः अत्रःस्यानांमहत्त्वनानामपिगर्गादिमुनिवाक्यमूलत्वेनप्रामा
ण्यमितिभावःस्फारदित्यादिविशेषणद्वयेनपूर्वग्रंथेभ्योस्यवैशिष्ट्यंद्योतितं अथसंबंधादिचतुष्टयकथनमंतरेणशास्त्रार
भवैयर्थ्यप्रसंगःतदुक्तंसिद्धैःश्रोतृप्रवृत्तीनांसंबंधकथनाद्यतःतस्मात्सर्वेषुशास्त्रेषुसंबंधःपूर्वउच्यते किमेवात्राभिधे

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

वि॰ टी॰ ४

यंस्यादितिपृष्टस्तुकेनचित् यदिनप्रोच्यतेतेनसेफलमल्पंतुनद्भवेत् सर्वस्यैवहि शास्त्रस्यकर्मणोवापिकस्यचित् यावत्प्रयोजनंनो अ॰
क्तंतावत्तत्केनगृह्यतइति एवंशृद्धोपदेशहृदिमत्वात्प्रतनेनैवप्रयेनसंबंधः सूचितः परिमलाख्यफलमित्यनेनअभिधेयंसूचितंतस्या १
स्यशास्त्रस्यचप्रतिपाद्यप्रतिपादकत्वेनसंबंधोवाप्रयोजनंतुशुभाशुभफलादेशः तज्जिज्ञासुरधिकारी एतदुक्तंभवति चतुरा
ननमुखाद्धिनिसृतस्यास्यशास्त्रस्यनारदवसिष्ठादिमुनिपरंपरयास्मिन् लोके प्रथितस्यब्रह्मणासहसंबंधः उक्तंचनारदेन अस्यशा
स्त्रस्यसंबंधोवेदांगमितिधातृतः इति अस्यशास्त्रस्य वेदांगत्वमितिकृत्वाधातृतः संबंधइत्यन्वयः प्रख्यापयस्यमाणाभिधेयस्यतत्प्रतिपा
दकस्यशास्त्रस्य चप्रतिपाद्यप्रतिपादकत्वेनसंबंधः नक्षत्रशुद्धिकालमीमांसाराशिमेलकनवांशविचारग्रहयुक्तचंद्रताराबलंराहुलता
तिथ्यादिलग्नशुद्धिगोधूलिकगोचरनिर्णयशुभाशुभयोगभावफलयोगबलसामुद्रिकलक्षणादिमिश्रफलवधूवरप्रश्नादिकप्र
तिपाद्यत्वादत्राभिधेयं प्रयोजनंतुजन्मजन्मांतरार्जितसदसत्कर्मविपाकरूपशुभाशुभफलसूचकनक्षत्रग्रहफलादिनाजगतः
शुभाशुभनिरूपणं तत्राशुभफलंग्रहशांत्यादिनाग्रहबलाद्युपेतः सत्समयेविवाहादिसंपादनेनवासच्छकुननिमित्तादिनावंच
यिष्यतइतिकृत्वानथा तत्प्रतिकारनिरूपणंचउक्तंचनारदेनप्रयोजनंतुजगतः शुभाशुभनिरूपणमिति तज्जिज्ञासुरधि राम॰
कारीसचद्विजएवनतुशूद्रादिर्वेदांगत्वात् यतोद्विजैरेवसांगोवेदोध्येतव्योज्ञातव्यश्चउक्तंच तस्माद्द्विजैरध्ययनीयमेतत्पुण्यं ४
रहस्यंपरमंचतत्त्वमिति अध्यापनेतुब्राह्मणएवाधिकारी क्षत्रियवैश्ययोरध्यापननिषेधात् महाप्रयोजनंतुवेदांगाध्यय
नेनधर्मपरिपालनत्वात् जगतोऽशुभनिराकरणेनचसुकृतसंचयद्वारात्रिकालदर्शित्वेनयोगितुल्यावस्थांगतस्ययोगिव

त्रिरात्रिशय्यानंदावाप्तिलक्षणामोक्षावाप्तिः उक्तं च श्रीमद्भागवते गर्गं प्रति नंदेन ज्योतिषामयनं साक्षाद्यत्तत् ज्ञानमतींद्रियं प्रणीतं भ
वता येन पुमान्वेद परावरमिति सिद्धांतेपि योज्योतिषं वेत्ति नरः स सम्यक् धर्मार्थमोक्षान्लभते यशश्चेति गर्गो ग्रंथतश्चार्थतश्चैत
त्स्कंधं जानाति यो द्विजः अग्रभुक् स भवेच्छ्राद्धे पूजितः पंक्तिपावन इति अत्र सम्यक्पदग्रहणेन असम्यक् शास्त्रपरिज्ञानादय
था शास्त्रं विवाहादिफलादेशकस्य पंक्तिदूषकत्वमस्तीति गम्यते यत उक्तं तेनैव अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते स पंक्तिदू
षकः पापात्मा ज्ञेयो नक्षत्रसूचकः नक्षत्रसूचको दिष्टमुपवासं करोति यः सव्रजत्यंधतामिस्रं सार्द्धं मृक्षविदं विनेति अक्षविदं विनात्र
नक्षत्रसूचकेन अतथ्याय था स्त्रमादेशक एव नक्षत्रसूचकः न त्वकृत्स्नशास्त्रपरिज्ञानाद्दैवज्ञत्वं प्रपद्यत इत्युक्तत्वात् पूर्वार्जितस
दसत्कर्मविपाको दैवमित्युच्यते तज्जानातीति दैवज्ञः तस्य भावो दैवज्ञत्वं बृहस्पतिरपि दैवज्ञैः शास्त्रतत्वज्ञैर्मुहूर्तो निश्चीयते यदि स
न्मुहूर्तः समन्वेष्यो नान्येन नक्षत्रसूचकैरिति अत एव कश्यपेन वेदपारगसाहित्येनैव नक्षत्रसूचकस्य श्राद्धे पूज्यत्वं स्मर्यते अ
विविश्च भहंताच्चव्यंगो नक्षत्रसूचकः काणः कुंठश्च मंदश्च श्वित्री मूर्खः सुरत्नवान् सर्वे श्राद्धे नियोक्तव्या मिश्रिता वेदपारगैरि
ति दैवोपि स्मर्यते प्रायश्चित्तं चिकित्सां च ज्योतिषं धर्मनिर्णयं विना शास्त्रेण यो ब्रूयात्तमाहुर्ब्रह्मघातकमिति अतो सम्यक् शा
स्त्रवेदनादयथाशास्त्रफलादेशको नक्षत्रसूचकः ननु शास्त्रैकदेशवेत्तेति सिद्धं अत एवोक्तं गर्गादिभिः वनं समाश्रिता येपि नि
र्ममा निःपरिग्रहाः अपि ते परिपृच्छंति ज्योतिषां गतिकोविदं मुहूर्ततिथिनक्षत्रमृतवश्चायने तथा सर्वाण्येवाकुलानि स्युर्न स्या
त्सांवत्सरो यदि नासांवत्सरिके देशे वस्तव्यं भूतिमिच्छता चक्षुर्भूतो हि यत्रैष पापं तत्र न विद्यते इत्यादि मुक्तावल्यादिष्व

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



पिदशदिनकृतपापंहंति सिद्धांतवेत्ता त्रिदिनजनितमंहस्तंत्रवेत्ता निहंति करणभगणवेत्ता चैकरात्रोत्थपापं जनयति बहुपापं चैकं
नक्षत्रसूचीति एकः केवलः नक्षत्रसूचकः अतोस्य शास्त्रस्यैकदेशाध्ययने पित्रैवर्णिकस्यैवाधिकारोस्तीति सिद्धं तत्राप्यार्ष
वाक्यानां पाठमात्रेणापि फलमस्ति स्मृत्यादिपठनवदिति ॥२॥ अथ विवाहादिसर्वकार्येषु नारदादिभिः प्रथममुद्दिष्टत्वात्तच्चं
गशुद्धेः प्राधान्यं तत्रापि प्राधान्यं नक्षत्रशुद्धेः तथा चाहुः भावांशशुद्धोदयमप्यशुद्धं भशुद्धिहीनं प्रवदंति संतः तस्माद्विशेषेण
भशुद्धिमादौ विचार्य कार्यं शुभमाहुरार्या इति अतः सैव प्रथममभिधीयते ॥ सा नूक्तनक्षत्राणामेव अतः प्रथमं शुभनक्षत्रा-
ण्युक्त्वा तत्प्रसंगे न शुभा नैसारमासांश्चाह ध्रुवेति वंशस्थवृत्तं ध्रुवाणि रोहिणीत्र्युत्तराणि अनुराधादीनि प्रसिद्धानि करो हस्तः

॥ ध्रुवानुराधामृगमूलरेवती करं मघास्वातिरदूषणो गणः ॥

तेषां समाहारे एकवद्भावः क्लीवत्वं च मघास्वात्योः प्रसिद्धे अयमेकादशनक्षत्रात्मको गणः चेददूषणः वक्ष्यमाणपापवेधा
दिदोषरहितः तदा मृगीदृशां स्त्रीणां मृगजातिः स्त्री मृगी तस्या दृगिव दृग्यासां तासां करग्रहे विवाहे मंगलकृत्स्यात् वक्ष्यति च
स्फुरद्दूषणभूषणोन्यादि क्रूरवेधादिदोषे त्वशुभफलं तत्र तत्र वक्ष्यति रवेरिति षण्णां गृहाणां समाहारः षड्गृही मकर आदि
र्यस्याः सा मकरादिः सा चासौ षड्गृही च मकरादिषड्गृही अमीना मीनरहिता मकरकुंभमेषवृषमिथुनस्थो कौ विवाहे मंगलकृदि-
त्यर्थः नन्वत्र नक्षत्रग्रहादीनां शुभफलकर्तृत्वं कथं युज्यते प्राचीनसदसत्कर्मविपाकरूपस्य दैवस्यावस्थावश्यंभावि



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

त्वात् तथाच शौनकः येनतु यस्य सर्वं तस्य विधानं सुरेश सचिवोपियः साक्षान्नियतिज्ञः सोपिनशक्तोन्यथाकर्तुं तद्विज्ञानोपायं लग्नवि
धानेन संप्रवक्ष्यामि जन्मन्यथावाप्रश्नेतत्सदृशफलं विवाहेपीति अतोयथोक्ताविवाहादिसमयादैवपाकज्ञानोपायाः विवाहादिषुया
दृशसमयावाप्तिस्तादृशंदैवमस्तीतिज्ञेयं यत उक्तं तेनैव वरणप्रदानपरिणयशचीप्रपूजाभिषेककरणानि शुभशुभेतिथौविलग्ने
न भवंति किलाल्पपुण्यानामिति अतो विवाहादिशास्त्रं दैवज्ञापकमेवेति नैवं सद्युक्तं मन्यसे विवाहादिषुविहितशुभकालस्य
यंत्रादिनाप्रयत्नेनपुरुषसाध्यत्वात् सत्युभययोगेकर्मसिद्धिर्नकेवलंदैवेनेति तथाचवक्ष्यति फलेषदिप्रायत्नमेवतल्लिंकृष्या
द्युपायेषुपरः प्रयत्नः श्रुतिः स्मृतिश्चापिनृणांनिषेधविध्यात्मकेकर्मणिकिंनिषण्णेति यदितु दैवमेवफलेतत्तदासर्वोपिजनःकृष्या

रवेरमीनामकरादिषड्ढीकरग्रहेमंगलकृन्मृगीदृशाम् ३॥

द्युपायेषुकथंप्रवर्ततेकिंचनिषधविध्यात्मकाः श्रुतिस्मृत्यादयोपिनिरर्थकाःस्युः नव्रूक्षमारोहेन्नकूपमेवेक्षेतनवाहुभ्यांनदीं
तरेन्नसंशयमभ्यापद्येतेत्यादीनामाश्वलायनादिकल्यानाश्रीकामःपुष्टिकामोवाग्रहयज्ञंसमाचरेदित्यादियाज्ञवल्क्यादिवच
नानांचिकित्सादिशास्त्रस्यचवैयर्थ्यप्रसंगःस्यादित्यर्थः तथाचयाज्ञवल्क्यः दैवेपुरुषकारेचकर्मसिद्धिर्व्यवस्थिता तत्रदैवम
भिव्यक्तंपौरुषंपौर्वदेहिकमितिकर्मसिद्धिःफलावाप्तिरिष्टानिष्टप्राप्तिलक्षणासाचकेवलंदैवेनव्यवस्थिताअपितुपुरुषका
रेपि पुरुषकारः प्रयत्नः अपिचपुरुषकाराभावेदैवमेवनास्तीत्याह तत्रदैवमिति पूर्वदेहार्जितंपौरुषमेवदैवमित्युच्यते न

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

च्चस्मृत्स्य पुरुषकारादनंतरं महाफलोदयेन अभिव्यक्तं अतएवाह वसंतराजः पूर्वजन्मजनितं पुराविदः कर्मदैवमिति संप्रचक्षते
उद्यमेन तदुपार्जितं तदा वांछितं फलति नैव केवलमिति तस्मात्प्रयत्नाभावे दैवं नास्तीत्यतो विवाहादिषु शुभकालावाप्तिलक्ष
णो यत्नो विधातव्यः तथा च नारदः सर्वाश्रमाणामाश्रेयं गृहस्थाश्रममुत्तमं यतस्तदपि योषायां शीलवत्यां स्थितं ततः तस्याः
सच्छीललब्धिस्तु सुलग्नवशतः खलु पितामहोक्तं सर्वास्य लग्नशुद्धिं प्रवक्ष्महे इति अतो दैवयत्नयोरन्यतरेण फलसिद्धिर्न भव
तीत्यत्र दृष्टांतमाह याज्ञवल्क्यः यथाह्येकेन चक्रेण रथस्य न गतिर्भवेत् तद्वत्पुरुषकारेण विना दैवं न सिद्ध्यतीति अतएव ग्रं
थकारोपि वक्ष्यति प्राक्कर्म बीजं सलिलानलौ वीसंस्कारवत्कर्म विधीयमानं शोषाय पोषाय च तस्य तस्मात्सदासदाचारवतां न
हानिरिति यत्प्राक्कर्म तस्य शोषाय पोषाय च अधुना विधीयमानं कर्म भवति किंवत् बीजं सलिलानलौ वीसंस्कारवत् यथा स
द्बीजं शुभैः सलिलादिसंस्कारैः संस्कृतं सदुदेति वर्धते च तद्वत्प्राक्कर्मोपि परैर्हितेन सत्प्रयत्नेन वर्धते अन्यथा शीयत इत्यर्थः
तस्मात्कारणाच्छास्त्रविहितविवाहादिशुभकाललग्नग्रहशांतिचिकित्सादिसदाचारवतां पुरुषाणां सदा न हानिः स्यात् अपि च दैवं
किल पुरुषनिष्ठं तद्देशकालवशात एव विपच्यते दृष्टमपि दृष्टांतरसाहित्येनैव दृष्टकारि यथा दुर्जनो रंध्रान्वेषणेन अतएवो
क्तं श्रीपतिना अकालचर्यां मृगयां च साहसं समुद्रयानं गजवाजिवाहनं गृहे परेषां गमनं च वर्जयेत् क्रूरेषु राजा विषमस्थितेष्वि
हेति वसंतराजोपि नैतद्दैवमिह येन देहिनां पूर्वकर्म विहितं कुतोपि हि देशकालवशतो विपच्यते युज्यते व्यवहितं कथं तु तदि
ति स एतद्देव दैवप्रामाण्यं शेषं स्पष्टं अतश्चादृष्टमपि दैवफलं विवाहादिसत्समयावाप्तिरूपयत्नेन निवर्त्यं तत एव यथाह स

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

एवसर्पवन्हिविषकंटकादिकंयेनदैवशरणोपिमानवः दूरतस्त्यजतिपौरुषंसदातेनतःस्फुरतिदैवतोधिकंपौरुषेणहृदयेशितांग
तिंप्राप्नुवंतिपुरुषाःसुमेधसः यांतिदैवशरणाःलयंयथापादयोर्ज्वलतिदाववपावके इति अतःशकुनगोचरादिनाआवेदितेअशुभेदै
वफलेशुभेनप्रयत्नेनसंतोषंचयंत्येव तथाचसएवाह तन्निरूप्यशकुनेनदुःखदंवंचयंतिनियतंसमुद्यतंपौरुषेणपुरुषाःसु
मेधसःसंश्रयंतिपुनरात्मनोहितमिति नदैवफलंदुःखदंसमुद्यतंशकुनेननिरूप्यपुरुषाःपौरुषेणावंचयंतीत्यन्वयः अथानंत
रोक्तेःसर्पवह्न्यादिदृष्टांतःपौरुषमेवफलसाधनंकथंनस्यात् उच्यतेसमानभूमिषुसमानसलिलादिसंस्कारेपिफलवैचित्र्य द
र्शनात्कारणांतरंकल्प्यतेतद्देवदैवमिति अतउभययोगेसत्येवफलसिद्धिरिति अपरकेचित्बुद्धिःकर्मानुसारिणीतिमन्यमानाःप्रय
त्नोपिदैवानुरूपइतिकृत्वादैवमेवफलसिद्धेःकारणमितिमन्यंते तन्न चतुरस्रं अनवस्थादोषप्रसंगात् तथाहिप्राक्समार्जितपौरुष
मेवकिलदैवमुच्यते अन्यस्यःप्रयत्नःप्राचीनपौरुषबलस्फुरणेनदैवेनजन्यः तदपिपौरुषंतत्प्राचीनपौरुषजन्यंतदपितत्प्राचीनपौरुष
जन्यमित्यनवस्था अतःप्रयत्नोपिदैवप्रेरितइत्यनुपपन्नं नैतन्मन्यामहेनखल्वियमनवस्थादूषणं अनादिसंसारेवीजांकुरन्या
यदृष्टांतसद्भावात् नचैतद्युक्तं नहिवीजांकुरन्यायादेवमेवमूलंइतिनिश्चीयते नापिप्रयत्नः अतःसत्युभययोगेफलसिद्धिरिति
यतं चतुरस्रं एवंचेत्तर्हिशौनकोक्तवाक्यानांपूर्वोक्तानांकासंगतिः उच्यते दैवंतुदृढकर्मरूपमदृढकर्मरूपंचेतिद्विविधं तत्र
दृढकर्मरूपंस्यावश्यंभावित्वाद्ग्रहशांत्यादिरूपेणसंपूर्णप्रयत्नेनापितन्निवारयितुंनशक्यतेदृढमूलत्वात् खरतरवाता
घातेपिदृढमूलपादपवत् अदृढंकर्मरूपंतुप्रयत्नेननिवार्यते प्रशिथिलमूलपादपवत् तथाचजातकेयेधर्मकमनिर

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि·वृं· नाइत्यादि प्रयत्नाभावेतु विपच्चतएवतयाचतत्रैव पापिष्ठायेदुराचारादेवब्राह्मणानिंदकाः अपथ्यभोजिनस्तेषामकालमरणं शुं·
टी· ध्रुवमिति अतएवचिकित्साशास्त्रेपि पूर्वजन्मकृतंपापंव्याधिरूपेणबाध्यतेइति सर्वेषां व्याधीनांसाधारण्येनकर्मजन्यत्वेपिसाध्या
७ साध्यत्वेनद्वैविध्यमस्ति तत्रापिकृच्छ्रोपायः सुखोपायोद्विविधःसाध्यउच्यते असाध्योहि द्विविधोत्तेपोसाध्योयप्याप्रतिक्रियःसा
ध्यासाध्यत्वमायांतिसाध्याश्चासाध्यतांतथा घ्नंतिप्राणान्नसाध्यस्तुनराणामक्रियावतामित्यादिना अचिकित्सितव्याधेर्दृढक
र्ममूलत्वमन्येषामदृढकर्ममूलत्वंनिश्चीयते अतोदैवस्यदृशंद्वैविध्यमस्ति अतः शौनकादिवाक्यानांपूर्वपक्षरचितानामयम
र्थः येनत्विति येनपुरुषेणायस्मातव्यंअवश्यंभोक्तव्यंदृढकर्मोपार्जितमितियावत् तद्दुहस्यनिरप्यन्यथाकर्तुंनशक्तःअर्थाद
न्यदृदृढकर्मोपार्जितंसन्यथाकर्तुंशक्यइत्यर्थः वरणप्रदानेति तद्विज्ञानोपायमिति अत्रायंभावः यस्यपरिणयनादिकालेइष्टग्रह
स्यतिं चंद्रादेोदृष्टेसतितदैवपाकस्यतादृशमशुभफलमितिज्ञातं उक्तंचविवाहपटलांतेतेनैवएवंतुधामतिमान् भविष्यफलमादि
शेत्समुद्वाहेइति अतोबौधायनादिविहितेनतच्छांतिरूपेणधर्मेणाप्रशस्तात्मकेनतन्निवर्त्यते धर्मेणपापमपनुदतीतिश्रुतेःशुभ
कालेनतुअशुभदैवफलंनिवर्त्यते शुभंतुवर्ध्यते अतएवतत्रैवतेनैवोक्तंसुपरीक्षितंविलग्नंधर्मार्थसुखायभवतिदंपत्योःतद्विप राम·
रीतंनिमेषादनागतानां तत्कालेनअपरीक्षितंविलग्नंनहिदेयंपंडितेनदैवविदाअपयोशुनिधौमज्जतिशास्त्रमविज्ञाययोदद्या ७
दितिदृढस्यतिस्प्याह॥ स्वभावादेवकालोयंशुभाशुभसमन्वितः अनादिनिधनःसर्वोननिर्दोषोननिर्गुणः तस्मान्निर्दोषका
लोथोमुहूर्तमधिगच्छतांकालःशुभोगुणैर्युक्तोबलवद्भिःशुभप्रदः दोषैर्युक्तोपिचप्राणैर्बहुभिर्व्यस्ययद्वयोरिति अतःशुभ

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

कालबलेनपूर्वकर्मोपार्जितमशुभमपिनिवर्तयतीतिसर्वमनवद्यं अतोनक्षत्रादीनांकालावयवत्वात्सर्वकर्मसुशुभाशुभफलदातृ
त्वमस्तीतिसिद्धं २ अथपूर्वाफाल्गुनीपुष्ययोर्वैशिष्ट्योक्तौनन्मतनिरासार्थमाह इंद्रवज्रोपेंद्रवज्रामिश्रणान्मिकोपजातिकेयं प्रकृ
ष्टं चेतोयस्यासौप्रचेताः तस्यापत्यंप्राचेतसोमुनिविशेषःसभगर्क्षेपूर्वाफाल्गुनीनक्षत्रेशिवंशुभमस्मिन्विवाहेयत्प्राह तस्मिन्नक्षत्रे
कृत्वापरिणीतासीतासुखंनसिषेवे नसेवितवतीवनवासरक्षोहरणादिकंदुःखमेवाप अतोगर्गशौनकनारदादिभिर्नोक्तमितिस्फु।
त्वात्तन्नादरणीयमितिभावः ननुविवाहेभगर्क्षेविधायकस्यमुनिवचनस्यकथमयंप्रत्यक्षबाधःउच्यतेतस्यसीताविवाहात्प्राक्युग
विशेषविषयत्वादितियोजनीयं पुष्यस्तु अतिकामंपुष्यति वर्द्धयति एवंकारणादस्मिन्विवाहविषयेसपुष्यःप्रजायतेब्रह्मणःस।

प्राचेतसःप्राहशुभंभगर्क्षेसीतानदूढानसुखंसिषेवे ॥

काशाच्छापंआपप्राप्तवान् पुष्णातिकार्याणीतिपुष्यःकवर्गतोनिपातःब्रह्मणःकिलविवाहःपुष्येभूत् अनंतरंशंभुविवाहसम
येपार्वतीसौंदर्यदर्शनात्प्रचलितचेतसोब्रह्मणःपरिच्युतवस्त्रांतप्रसृतवीर्यस्यहस्तद्वयेनपरामृष्टस्यतत्तुमध्यस्थितकणाः सह
स्रेभ्योनिष्पन्नाअंगुष्ठप्रमाणाःषष्टिसहस्रमितावालखिल्यानाममुनयोभूवन्नितिब्रह्मपुराणादौप्रसिद्धंततोनुतप्तोब्रह्मज्ञानदृ
ष्ट्यासम्यगवलोक्यपुष्यकृतविवाहनिमित्तमिदमितिकामोद्रेकरूपंवैकृतमितिनिश्चित्यविवाहविषयेपुष्यंशप्तवानितिकृत्वा
गर्गादिभिःसनिषिद्धइतिभावः तथाचशौनकः अब्दचतुष्काच्चकन्यागुरुकुलविद्वेषिणीभवतिपुष्येकृतपाणिपतिसंत्यक्तायेधव्यं

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



वासमाश्रोतीति अन्येपि ग्रहेणाविद्धोप्यशुभान्वितोपीति ४ अथविवाहे प्रावृट्कालादिकं केश्चिदुक्तंतन्मतंनिरस्यति इंद्रवंशावं
शस्थमिश्र गान्मिकोपजातिका प्रावृड्वर्षाः वसंतः प्रसिद्धः ऊर्जः कार्तिकः सहामार्गशीर्षः तेषु करग्रहः परैरन्यैर्वात्स्यपराशरा
दिभिः उदाहारि उदाहृतः तन्मतंहारि नहरतीति हारिमनोहारि न चाविस्यर्थः तत्रहेतुमाह रवेरिति यतोरवेरुत्तरायणंमकरा
दिषट्कं अवैसारिणंमीनरहितं मीनोवैसारिणोऽडजइत्यभिधानात् पुरंध्रीणांस्त्रीणांपाणिग्रहणेपरायणं अतिश्रेष्ठं।
अमीनोत्तरायणस्यगर्गादिबहुसमतत्वाद्दक्षिणायनः पातिनांप्रावृडादीनांग्रहणमेकदेशीयमतोनादरणीयमितिभावः।

पुष्यत्सु पुष्यत्स्विति काममेव प्रजापतेरायसशायमस्मात् ४ प्रावृड्वसंतोर्जसहः करग्रहः परैरुदाहा
रितन्मतं रवेरवैसारिणमुत्तरायणंपुरंध्रिपाणिग्रहणेपरायणं ५ याम्योत्तराः प्रागपराश्चपंचद्वेद्वेचरे

तथाचज्योतिःसारे स्यात्सौवर्षमतूनमिह तितुयारैभ्योयनंचोत्तरंस्त्रीनामानमृतुंविहायमुनयोमांड((रवेरचयेद्विदिस्तु॥
व्यशिष्याजगुः चैत्रमोश्वयं पराशरः परिणायेपौषचद्रोभीयदंत्वाषाढादिचतुष्टयं नशुभदं केश्चित्स्मदिष्टंबुधैरिति स्त्रीनामाक्र
तुः प्रावृट् प्रारच्च शौनकस्तु वर्णविशेषेणात्रतुविशेषमाह परिणयकालः शुभदः शारदिवसंतेच विप्राणांराजन्यवैश्ययोरपि 
शुभदोग्रीष्मः समुद्दिष्टः घनसमये शूद्राणां शिशिरेचान्यत्रसंकरभवानां दस्तु अप्रवृद्धोहर्षीकेशोयावत्तावन्नमंगलमिति॥ शु
क्लैकादश्युत्तरकार्तिकेमार्गशीर्षेचविधत्ते अन्येपि तापाढप्रभृतिचतुष्टयेविवाहइत्यादिनातोविधत्ते शौनकस्तु तौनिषेधति कु

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

लदा वै कार्तिके मासि सौम्ये परवेश्मरता कलहप्रदा दुःखसंततेति शार्ङ्गधरादिभिस्तु तौम्यधम्मौ उक्तौ एवं सति देशाचारतोत्र व्यवस्था ज्ञे
या देशे देशे या स्थितिः सैव कार्येति वराहोक्तत्वात् दाक्षिणात्या हि मार्गशीर्षे विवाहं कुर्वंति केचित् गुर्जराः कार्तिकेपीत्यादि अतो
ग्रंथकृता स्वदेशाभिप्रायेणेदमुक्तं इति सर्वमनवद्यं ५ अथ नक्षत्रदोषान्विवक्षुर्वेधदोषस्य महादोषांतःपातित्वेन प्राधान्या
त्तमुपजातिकाद्वयेन तावदाह याम्योत्तराः प्रागपराश्च पंच रेखा रचयेत् विदिक्षु कोणेषु द्वे द्वे रेखे रचयेत् इदं पंचशलाकाख्यं
चक्रं तत्र चक्रे सहाभिजिद्विदिग्द्वितीयार्गलिताग्नितारः भवर्गः भवेत् अभिजिता सह वर्तते सौ सहाभिजित् तेन सहेति तुल्ययोग

विदिग्द्वितीयार्गलिताग्नितारः सहाभिजित्तत्र भवेद्भवर्गः ६ तस्मिन्नभिन्नाग्रगतं भिनत्ति ग्रहो विवा
हर्क्षमशेषमेव स्त्रीपुंसयोरायुरसौम्यवेधः सौम्यव्यधो हंति सुखानि शश्वत् ७ वैश्वदैवतचतुर्थैवःश्रवः

इति वक्ष्यति हि: तत्र सहस्य सादेशस्य वैकल्पिकत्वं विदिक्षु द्वितीयया रेखया तयार्गलिता संबद्धा अग्नितारा कृत्तिका यस्य स तथा को
णस्य द्वितीयरेखातः कृत्तिकादीनि साभिजिंति नक्षत्राणि सव्येन मार्गेण असव्येन वा न्यसेदित्यर्थः अपसव्यमार्गस्य शिष्टगर्हित
त्वात् सव्यमार्गोत्र श्रेयान् ६ तस्मिन् चक्रे अभिन्नाग्रगतं विवाहर्क्षं अशेषं समस्तमेव ग्रहो भिनत्ति यस्यां रेखायां ग्रहस्तदग्रस्य नक्ष
त्रं वेधयतीत्यर्थः विवाहग्रहणं विवाहकृत्योपलक्षणं यथाह श्रीपतिः वधूप्रवेशे दाने च वरणे पाणिपीडने वेधः पंचशला
काख्येन्यत्र सप्तशलाकके इति अशेषग्रहणाच्चरणावधिनिरासार्थेन द्विपयं वक्ष्यति वेधफलमाह स्त्रीपुंसयोरिति असौम्य

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



वेधः पापग्रहवेधः स्त्रीपुंसयोरायुर्हंति स्त्रीच पुमांश्च स्त्रीपुंसौ अचतुरादित्वान्साधुः सौम्यव्यधः सौम्यग्रहवेधः शश्वदनवरतं सुखा- 
निहंति ७ अत्र सहाभिजिदित्युक्तं अतोभिजित्प्रमाणं तथा विवाहकृत्यादन्यत्र सप्तरेखाचक्रेवेध इत्याह रथोद्धता वैश्वदेवनसुत्तराषाढा
नस्य चतुर्लवश्चतुर्थांशः अंतिमः श्रवः श्रवणस्तस्य पंचमूलवः पंचदशांशः आदिमः इयंद्दहवेधादिविषये अभिजिन्मितिः स्यात् अय
मनंतरोक्तोव्यधोवेधः विवाहात्क न्याचरणादि विवाहकृत्यादन्यतः अन्यत्रसर्वत्र नवंधवास्तुयात्रादिषुसप्तरेखवलयेसप्तरेखचक्रे वि
लोक्यते तथाच श्रीपतिः वधूप्रवेशेदानेचेत्यादि अत्रविवाहपटले अन्यकृत्योपयोगिवेधनिरूपणादुद्धादयः सर्वेवक्ष्यमाणादो

पंचमूलवद्दहाभिजिन्मितिः अन्यतः परिणयाद्यंव्यधः सप्तरेखवलयेविलोक्यते ८ सकिलवेधविधिर्द्दि
तृतीययोश्चरणयोर्मिथआदिचतुर्थयोश्चअशुभविद्धमशेषमुडु त्यजे चरणगंशुभवेधसंपदि ९ यदशुभै

पासाधारण्येनसर्वंशुभकृत्येषुज्ञातव्यादुमितिसूचितं तथाचवक्ष्यति तदखिलेपिखलंशुभकर्मणीति ८ अथपादवेधंतद्विषयं चाहद्रु
तविलंबितं सअनंतरोक्तोवेधविधिर्द्दितृतीययोश्चरणयोस्तथा आदिचतुर्थयोश्चरणयोर्मिथः परस्परंस्यात् द्वौचत्रयश्चतेषांपूरणौ 
द्वितृतीयौतयोर्द्दितीयतृतीययोरित्यर्थः आदिश्चचत्वारश्चआदिचत्वारः तेषांपूरणौ आदिमचतुर्थयोरित्यर्थः प्रथमचरणस्थितेग्र
हेविद्धनक्षत्रस्यचतुर्थचरणोविद्धश्चतुर्थस्थेप्रथमइत्यर्थः एवंद्वितीयतृतीयावपिकिलेतिप्रसिद्धार्थेन्यासक्रमेणप्रथमादिचरणा-
स्थितेग्रहेतदेखाग्रनक्षत्रचतुर्थतृतीयद्वितीयप्रथमाश्चरणाः क्रमेणविद्धाः स्युरितिप्रसिद्धपादवेधविषयमाह अशुभेति अशु

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

भविद्धंपापग्रहविद्धमुडुनक्षत्रमशेषंसमस्तंत्यजेत् शुभस्य शुभग्रहस्यवेधं चरणस्थितं असंपदि असंपत्तौ अन्यनक्षत्रालाभेसति
त्यजेत् अर्थादन्यनक्षत्रसंभवेसति शुभविद्धमपिनक्षत्रमशेषमेवसंत्यजेदिति तथाच श्रीपतिः क्रूरसंसौम्यगृहैर्विद्धं पादमात्रंपरित्य
जेत् क्रूरैस्तुसकलंत्याज्यमितिवेधविनिश्चयः यत्तु क्रूरैरपित्यजेत्पादं केचिदूचुर्मनीषिणइतिकेषांचिन्मतंतन्नारदादिवहु
मतविरोधान्नादरणीयमितिभावः ९ एवंवेधदोषंनिरूप्य दोषांतराण्याह द्रुतविलंबितं यन्नक्षत्रमशुभैः पापग्रहैर्गतंगम्यं अ
धिष्ठितंच अशुभश्च अशुभौच अशुभाश्च अशुभाः द्वंद्वैकशेषः एकेन अशुभेनद्वाभ्यांत्रिभिर्वागतंगम्यं भुक्तंभोग्यं अधिष्ठितंयु

गतंगम्यमधिष्ठितंयदपिचत्रिविधाद्भुतदोषितं तरणितारकतोपिचतुर्दशंतदखिलेपिखलंशुभकर्मणि १०
रविनखैर्मितमर्कविधुंतुदौ मुनिभिरिंदुरखंडलमंडलः द्रुतवहाकृतिषड्भिनदंतिभिः क्षितिसुतादभिलत्तय

तंयदपिचनक्षत्रंत्रिविधैर्भौमांतरिक्षैरद्भुतैः दूषितंदिव्याद्भुतानिग्रहर्क्षजनितानिपरन्यकादीनि भौमानिभूकंपादीनि आंतरिक्षाणिउ
ल्कादीनि एषामन्यतमम‌द्भुतं यस्मिन्दिननक्षत्रेजातं यदपिचतरणितारकतः सूर्याधिष्ठितनक्षत्राच्चतुर्दशसंख्योदितमित्यर्थः तरणेस्ता
रकंनक्षत्रंतरणितारकंक नीनिकायांनक्षत्रेतारके तारकेतिचेतिविश्वः कनीनिकानेत्रतारातनक्षत्रमखिलेपिशुभकर्मणिविवाहव्रत
बंधयात्रादौखलंपापंस्यादितिप्रत्येकंसंबध्यते १० अथलग्नदोषमाह द्रुतविलंबितंअर्कः सूर्यः विधुंतुदइतिव्यथयतीतिविधुंतु
दोराहुः तौरविनखैर्मितंस्वाधिष्ठितनक्षत्रात्क्रमेणाद्वादशविंशतितमं अभिसंमुखंलत्तयतः खंडमेवखंडलं खंडलंभागः छेदश्चे

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



त्रिशीरस्वामीनखंडलमखंडलंतन्मंडलंयस्यासौतथासंपूर्णमंडलश्चंद्रः मुनिभिःसप्तभिर्भिन्नं अभिलक्षयति यदुक्तं भवति संपूर्णमंड लश्चंद्रः किलपूर्णिमांतेभवतितत्रयत्रस्थस्तत्तस्मात्सममचंद्रोभिलक्षयति तच्चरूलपक्ष्यासन्नंसदास्यादिति द्रुतवद्वाल्मयः। आहृति द्वाविंशतिः षड्सिद्धाः जिनाश्चतुर्विंशतिः दंतिनोष्टौते रूलस्तन स्तत्रस्वाधिष्ठितनस्तत्रात् क्रमेणक्षितिसुताज्ञौममार भ्यग्रहं अभिसंमुखंलक्षयति भौमादयः क्रमेणाश्व्यादीनिलक्षयतीत्यर्थः ११ अत्रसर्वेषांसंमुखलक्षनमेवोक्तं पूर्वस्लचतुर्णां दृष्ठलक्षनेचतुर्णांमभिलक्षनंकथमुक्तं तत्रहेतुमाह द्रुतविलंबितंइत्येवंविधेषुसदाग्रहाणांअभिलक्षनेसंमुखलक्षनेसति

तिग्रहः ११ इतिसतिषुसदामभिलक्षनेयदनुलक्षनमुक्तमृषिव्रजैः तदुडुपश्चिमपूर्वविभागयोरन
धिकाधिकदोषविवक्षया १२ उडुनिनिर्दिलितेषुभलक्षयानफलम स्तिवलस्यगलक्षया अस्तु

यदनुलक्षनंदृष्ठतोलक्षनऋषिव्रजैर्मुनिसंघैरुक्तं ऋजुमार्गेणसिध्यतोर्थस्यवक्रेणासाधनायोगादितिन्यायेसत्यपि तत्तु डुपश्चिमपूर्वविभागयोः नक्षत्रोत्तरपूर्वार्धयोः न्यूनाधिकदोषविवक्षयाहेतुनाउक्तं एतदुक्तंभवति ग्रहनक्षत्राणि प्राङ्मुखा निसंति तत्रपुरप्रेरितालक्षा अग्रस्थस्यदृष्ठेलगति पश्चात्प्रेरिता अग्रभागेअतः अग्रलक्षयालाभितनक्षत्रस्यपूर्वार्धेअधिकदो षःउत्तरार्द्धेन्यूनः दृष्टलक्षयातुपूर्वार्द्धेअल्पःउत्तरार्द्धेअधिकःस्यादितिअनेनहेतुनादृष्टलक्षनंमहर्षिभिरुक्तमित्यर्थः ग्रंथस्तत्तु लक्षितनक्षत्रस्यअखिलस्यापिनिषिद्धत्वादभिलक्षनमेवोक्तं १२ अथलक्षायाःफलमाह द्रुतविलंबितं उडुनितक्षत्रेषुभ





CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ग्रहलग्नयानिर्दलितेसतितस्यनक्षत्रस्ययद्विहितं शुभफलंतन्नास्तिकयाहेतुभूतयाबलस्यगलत्तयागलतीतिगलत्तस्यभा।
वोगलत्तातयानिर्बलत्वेनेत्यर्थः अशुभग्रहेणलग्नितेयद्भंनक्षत्रंतत्रऊढयोः परिणीतयोर्दंपत्योःपरमत्यर्थंअसुतापकरं प्रा
णतापदंसत् धनसुतानतिखादयतिअशुभलग्नितनक्षत्रेऊढाहितयोः प्राणतापोधनसुतानाशश्चभवतीत्यर्थः १३ अथैकार्गल
दोषमाह वसंततिलका ऊर्ध्वगतास्यकारेखातिर्यक्स्थिताभिस्त्रयोदशरेखाभिर्विद्धासतीखार्जूरिकंनामचक्रंस्यात् इहा।
स्मिन्चक्रेवक्ष्यमाणशीर्षनक्षत्रमारभ्यसहाभिजितिभचक्रेन्यस्तेसति सहअभिजितावर्तमानंतत्तथावहुव्रीहिः प्राग्वत्ता

भलग्नितमतितदूढयोर्धनसुतानसुतापकरंपरम् १३ विद्धात्रयोदशभिरूर्ध्वगतैकरेखाखार्जूरिकंत
दिहशीर्षभतोभचक्रे न्यस्तेसहाभिजितितारकराजभान्वोरेकस्यर्क्षगम्यगतयोर्नयनार्गलेयं १४ ॥

रकराजभान्वोश्चंद्रसूर्ययोः कनीनिकायांनक्षत्रेनतारकंतारकेतिचेतिविश्वः तारकाणांराजानारकराजः यद्वाऽब्जापोःसंज्ञायामि।
तिह्रस्वः स्वस्वनक्षत्रस्थितयोश्चंद्रार्कयोरेकरेखागतयोरियंनयनार्गलास्यात् परस्परदृष्टिपातलक्षणाःएकार्गलःस्यादित्य
र्थः कथंभूतयोः तुल्यर्क्षगम्यगतयोः ऋक्षयोर्गम्यगतेऋक्षगम्यगतेतुल्येऋक्षगम्यगतेययोस्तौतथा एकनक्षत्रस्ययावति
नक्षत्रगतेतावति अन्यस्यगम्येसतीत्यर्थः अनेनपादवेधः सूचितः तद्यथाप्रथमचतुर्थचरणयोरन्योन्यंकिलवेधः तत्रैकन
क्षत्रस्यप्रथमचरणस्थस्यपादमात्रंगतमन्यस्यचतुर्थचरणस्थस्यपादमात्रंगम्यंस्यात् एवंद्वितीयतृतीययोरपि तथाच।

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.





नारदेनमहादोषेषु पठितंस्वार्जूरिकंसमांघ्रिभमिति १४ अत्रशीर्षभत्तोन्यासउक्तस्तच्छीर्षभंतथैकार्गलंफलंचाह स्थोद्दताद्
ष्टयोगेसतितस्यदुष्टयोगस्यमितिःरूपसंयुताअर्धितासतीशीर्षभंभवति शेषमस्याःसाशेषिणीयद्विसाशेषिणीभवतितदासाद्धवि
म्व १३।३० युक्शीर्षभंस्यात्दुष्टयोगाःव्याघातमूलपरिघव्यतिपातविष्कुंभगंडातिगंडवज्रवैधृताः तत्रव्याघातसंख्या १३ रू
पसंयुता १४ अर्धिताजातं ७ शीर्षभंएवंमूलादिषु तथागंडोदुष्टयोगस्तस्यसंख्या १० रूपसंयुता ११ अर्धिता ५।३० इयंशेषि
णीजाता अतःसार्द्धत्रयोदशयुता १९जातंशीर्षभंमूलःएवमतिगंडेपि १७ मंगलमितिसार्गलेविधौसतिमंगलंगलति अर्गलया

शीर्षभंभवतिरूपसंयुताद्दुष्टयोगमितिरर्धितासति शेषिणीयदि चसार्द्धविम्बयुङ्मंगलंगलतिसार्गलेविधौ
१५ त्यक्त्वागतैष्यस्यपरेतुहेतुमुक्तेतिनस्त्रमशेषमेवएकार्गलस्यैवहिसाचभंगीसंध्यागतेयन्नलहस्तयं

वर्तमानःसार्गलःएकार्गलगतयोश्चंद्रार्कयोःसतोर्मंगलंनश्यतीत्यर्थः१५ अत्रैकार्गलविषयेपरमतमाह इंद्रवज्रा परेश्रीपत्यादयः
तुल्यर्क्षगस्यगतयोरितीमंगतैष्यस्यहेतुस्यःत्वाएकार्गलविद्धनस्त्रमशेषमेवोक्तंतित्यजंतितेषामयमाशयःहियस्मात्कारणात्संध्या
गतंसंध्योदितंनस्त्रंसर्वमेवगलहस्तयंति परिवर्जयंतिसैवभंगीरचनायुक्तिःएकार्गलस्यगलेहस्तेननोदयंतितिति गलहस्तयंति।
कस्मादित्याण्णिच् यद्दसंध्यागतरविणापादविद्धमपिसर्वमेवत्यस्येतनहृदेकार्गलस्थमपीत्यर्थः तिष्यपुनर्वस्वोर्नस्त्रद्व
द्वत्रस्यत्रद्वनरेतस्योगेपिपृथक्त्व ज्ञापकात्सर्वोपिद्विहोविभाषयाएकवत्स्यात् अतोगतैष्यस्येत्येकत्वं अथकैश्चित्क्रूर



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

षट्भांतरितमष्टममनिष्टमिति विशेषितं तच्चांद्रजामित्रे परिणतमित्याह १६ उपजातिका भाद्दीमंतरं यस्य तनया क्रूरस्य षड्भांतरं सृ
ष्टममनिष्टमेवेति केषांचिद्विशेषवादः विशेषोक्तिः असौ यस्मात्पापाद्धीनरमृत्स अस्मात्पापाच्चतुःपंचलवेषु चतुःपंचाशदंशेषु चांद्र
जामित्रं पर्यायेण सीत् परिणाममनिष्टं च चंद्रजामित्रेणापरिणतः नक्षत्रे हि चंद्रनिष्ठ प्रतिराशौ नवनमांशाः तस्माद्धाधीतेरस्थितः क्रूरस्य
द्राच्चतुःपंचाशदंश एव भवति अतः परिणामे चांद्रजामित्र मेवेदमिति क्रत्वा नायं विशेष इति भावः यस्मिन्मिनम्यानासङ्क्रे निर्दू
रूसगागमस्य १७ अथ केचित्स्याद्वेधे युक्तिरक्ता नाम नूद्य दूषयति उपजातिका विषादिना दिग्धेन परामृष्टेन शरेण अ

ति १६ क्रूरस्य भाद्धीनरमृत्समेवमनिष्टमित्येष विशेषवादः पापाच्चतुःपंचलवेषु चांद्रंजामित्रमसान्स्व
लुपर्ययेणासीत् १७ स्नता हते दिग्धशरार्दितस्य शस्तं मृगस्यामिषमेवमन्ये क्रूरांघ्रिवेधाय पदं वदंति तेनैव

र्दितस्य विद्धस्य मृगस्य आमिषं मांसं स्नता हते सनादन्यत्र शस्तं न हृद्यत्र पादे वेधः स एव पादो शुभ इति एवमन्ये केचित्क्रूरांघ्रिवेधाय
पदं विषयं वदंति तेनैव पदेन तेषां स्वपक्षहानिः स्यात् १८ एतदेव स्पष्टयति उपजातिका यथैकदिशि एकस्मिन् प्रवेशशरेणास
तो विद्धोपि एणः मृगः स्वैः असुभिः प्राणैर्विश्लेषं वियोगमायाति प्राणवियोगं प्राप्नोतीत्यर्थः तथा क्रूरस्यांघ्रिवेधात्तारकाणांव
लरूपयोः संपन्नश्येत् एतदुक्तं भवति यथा विषमदिग्धशरेण विद्धमृगस्य मांसं स्तनव्यतिरिक्तं शस्तं न हृद्यसिन्यादे पापवेधः
स एव दुष्ट इत्यन्ये वदंति तदयुक्तं यद्यपि विद्धमृगस्य स्तनव्यतिरिक्तं मांसं शस्तं तथापि तस्य मृगस्य गतासुत्वमापन्नस्य वलरूप

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰ दे॰ संपन्नश्च। एवंनक्षत्रपापवेधनक्षत्रस्यापि एवंगत्नेपादुकान्यायेनतेषांस्वपक्षस्थापकपदेनैवस्वहानिरिति अतोयदुक्तं अशुभःविद्धम अ॰
टी॰ शेषमुडु त्यजेदितितत्सम्यक् १९ अथचंडायुधदोषमाह उपजातिका हर्षणादीनांषण्णांयोगानांअवसानस्थंयन्नक्षत्रंतस्मिन्नेव १
१२ नक्षत्रेसेशंईशस्यदमेशंचंडमुग्रंअस्त्रंपतेत् चंडीशचंडास्त्रपातःस्यादित्यर्थः तत्फलमाहमंगलेतिमंगलानांभंगस्तलस्रमयस्य।
तत्तथामंगलभंजकमित्यर्थः २० अथचंडायुधसंभवार्थयोगनिर्देशात्तत्साहचर्येणादुष्टयोगानांवर्ज्यविभागानन्तत्संगेनग्रह
णादुष्टकालंचाह उपजातिका गंगंडःशूलमूलःविविष्कंभःववज्रः व्याघ्याघातःअतिअतिगंडः एतेषुयोगेषुतेषामादिमाःक्रमे

तेषांनिजपक्षहानिः १८ विश्लेषमायानियथास्तभिःस्वैरेणःशारेरोक द्दिशि सतोपितथांशिवेधारपिता

एकार्गलाक्रूरस्यनश्येद्दलस्रुपसंपत् १९ यद्दंतगंहर्षणासाध्यशूलगंडव्यतीपातकवैधृतानां तत्रैवचं।

णाषट्शरत्रित्रिनंदषट्का ६।५।३।३।९।६। घटिकास्त्यजेत् अत्राद्यक्षरग्रहणेनैवनामग्रहणं यथाहरज्ञातके शकुनुकुसुचरा
द्यावृद्धितोवीर्यवंतइति परिघस्येदंपारिघं आदिमंद्व्यंशे अर्द्धंत्यजेत कुत्रचित्र्यंशमितिपाठःसतुबहुवाक्यविरोधान्नादरणीयः राम॰
इंदुभान्वोःपर्वण्यतीतेसतिचंद्रार्कग्रहणानंतरंदिनसप्तकंत्यजेत् २१ अथग्रहणादिसंबंधिनक्षत्रदोषमाह शालिनीयस्मि १२
न्नृक्षेनक्षत्रेसैंहिकेयोराहुर्दृश्यतेग्रहणभवेदित्यर्थःग्रहणंसर्वेषांनानामुपलक्षणंयदपिचत्रिविधोद्भूतदोषितमित्युक्तत्वात्
ताहृत्स्ययवानारखेटयोभौमादिष्वन्यतमखेटयोर्भेदःभेदयोगःस्यात् तत्रनक्षत्रेआषण्मासंषण्मासपर्यंतंलग्नेदुभाजिस

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

येंदूमज्जनीमिलग्नेंदुभाक्तस्मिन्लग्नेंदुभाजिलग्नस्थे चंद्रे वासतीत्यर्थः किंचित्कुभं कर्म भाजिष्णुभाजनेतत् भाजिष्णुशोभमा
नेन स्यात् तद्यथा अश्विन्यां ग्रहणे जाते सत्यं यावत्त्रयोदशभागांतः मेषलग्ने सति अश्विनी लग्नस्थः स्यात् एवं भरण्यादि
ष्वपि चंद्रस्य नक्षत्रं दिननक्षत्रमिति प्रसिद्धं उक्तं च व्यवहारतत्त्वे उत्पातैस्त्रिविधैर्हतं ग्रहणगं वा मासषट्कं तथेति २२ अथोत्पा
तादिदोषयुक्तनक्षत्रस्य शुद्धिमाह उपजातिका उत्पातास्त्रिविधाः पापग्रहा रविभौमादयस्तैर्युक्तं तदुक्तं तदुत्पन्नदोषैस्त्यक्तं यन्न
क्षत्रं तत्तदा एतत्सकलेषु शुभेषु कर्मसु अर्हं योग्यं स्यात् तदा कदा यदि इंदुः आक्रम्य पुनर्भुनक्ति दोषत्यागानंतरं चंद्रभोगे जाते सति

द्रोढुनिघ्नेऽहसि यामसंज्ञे पतेन्न मंगलभंगलक्ष्म २० गं भू वि वल्या निधुपच्छाराश्चित्रिनंदपञ्चाष्टदिकाः
क्रमेण शुभान्यजेन्मासि धर्मेंदुभान्वोः पर्वण्यतीते दिनसप्तकं च २१ यस्मिन्नृसेवी स्यन्दनसे हि केयो

द्वितीयचंद्रभोगे शुद्धं भवतीत्यर्थः अथैतन्नक्षत्रसंगेन पातदोषमाह सजेदिति रवींद्वोः समक्रांतिनक्षत्रं सकलेषु शुभकर्मसु त्यजेत्
क्रांत्योस्तत्स्वरूपे समे च ते क्रांतितत्र च समक्रांतितत्र चंद्रार्कयोर्लंबाद्ये क्रांती यावत्समे तावदित्यर्थः २३ अथ तत्संभव
कालमाह उपजातिका ध्रुवनामा द्वादशो योगः तस्मिंस्त्रिभागशेषे तृतीयांशावशिष्टे सति ऐंद्रे षड्विंशे योगे त्र्यंशभोगेन च सं
ति चकारो वार्थे अस्य क्रांतिसाम्यलक्षणस्य दोषस्य संभवतीदानीं संभवः स्यात् तदासन्ने काले भवेदित्यर्थः ध्रुवे व्यतीपात
रव्यः ऐंद्रे वैधताख्य इति ग्रंथनिर्माणकाले द्वादश अयनांशा आसन् तदभिप्रायेणेदमुक्तं ततो यथायथमयनांशा अधि

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰ चं॰ कास्तथा तथा तयोर्योगयोर्न्यूनता चिंत्या तदानयनं श्रीगुरुणा केशवेनोक्तं त्रिघ्नायनांशानखभाजितास्तद्दीनाश्च साद्ध्रि त्रिभु वो द्विपक्षाः॥ अ॰ १
टी॰ ननु स्पष्टयुत्सोर्गतयोर्विलोक्य यातो व्यतीपातक वै घृताख्य इति चेदिंदुभान्वोः क्रांत्यंतरमानार्धयोगाधिकं तदा एषदोषो न स्यात् चंद्रार्कयोः
१३ क्रांत्यंतरं पात आनेतव्यार्ध्दं न्यूनं तावदेव चाय दोष इत्यर्थः तदानयनं ग्रंथगौरवभयान्नाकरणं कंठीरवेमद्रचितं द्विज्ञात्र मतोक्तं २४ अथ नक्षत्र
शुद्धेः माहात्म्यमाह इंदुनविलंवितं मृगांकस्य समृगीदृक् तस्या मृगांकमृगीदृशः चंद्रनक्षत्रस्य यदि स्फुरत् दूषणाभूषणकांतयः स्युः अदू
षणं पापवेधादिराहित्यं भूषणं शुभदृष्ट्यादि कं कांतिः प्रकाशः अक्षीणत्वादिः स्फुरत्स्फूर्तौ स्फुरंतिताः स्फुरंत्यः परिपूर्णाः ता श्चेत्ताः

भेदस्ताराखेटयोर्यत्नवास्यात् आषण्मासं तत्रलग्नेंदुभाजिभ्राजिष्णुस्यात्तो शुभं कर्मकिंचित् २२ उत्पातपा
पग्रहमुक्तमृक्षं यदींदुराक्रम्य पुनर्भुनक्ति तदा तदर्हे सकले शुकर्म सुत्यजेत्समक्रांतितनूरवीं दोः २३ त्रिभा

दूषणभूषणकांतयश्चेत्ताः स्तथा तदा सुतनोर्वेध्वाः करं अवाप्य करग्रहणं कृत्वा वरः भरेणासंभृतं परिपूर्णं शुभरसं शुभोपभोगं अश्नुते
प्राप्नोति दोषरहितनक्षत्रे पाणिग्रहकर्तृः अतिशुभं प्राप्नोतीत्यर्थः २५ इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणे राम॰
शविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां नक्षत्रशुद्धि प्रकरणं प्रथमोध्यायः १ अथ कालमीमांसाध्यायो व्याख्या १३
यते न क्षत्रशुद्धेर्मुख्यत्वादादौ तामभिधाय दायीराशिघटितं विवशुलग्नसंगेन तावत्कालमीमांसा निरूप्यते तत्रादौ जन्मराश्योरेव
घटितावलोकनयुक्तिमाह रयोइता अंगमस्तीत्येषामंगिनः तेषां शरीरिणां इदं प्रसिद्धं जन्मलग्नं अंगं शरीरं पूर्वं सुतयोर्मेनिरे म

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

न्यंतेस्म इंदुमंदिरं चंद्रगृहं जन्मनियम्श्चंद्रराशिः समनइति मेनिरे तथाचाहुः शौनकादयः शारीरं लग्नवशात्स्यादिंदुः स्वंमानसं शशांकव
शादिति हियस्मात्कारणात्सौहृदं मित्रत्वं मनसोरेवतनुदेहयोः नकुलसर्पयोरपिसौमनस्येसतिसहवासित्वदर्शनात् तस्मात्कारणादयं
मेलकः इंदुगेहयोश्चंद्रराश्योरेवस्यात् जन्मराश्योरेवघटितयोगो नतु जन्मलग्नयोरिति सुष्ठुहृदयं यस्यसुष्ठुत्वतत्हृदयंचेतिवा तस्यभा
वः सौहृदं भावेऽण् हृदयस्यहृदादेशः पूर्वपदादेर्वृद्धिः महासुष्ठुहृदयंयस्यासौसुहृत् सुहृदौ मित्रामित्रयोरिति निपातः सुष्ठु
चतत्हृच्चेतिवा तस्यभावस्तथातत्तुहृद्भगसिंध्वंते पूर्वपदस्यचेति पूर्वोत्तरपदाद्योर्वृद्ध्या सौहार्दमित्येवस्यात् छंदसितुमहतेसौभगा

गशेवेधव नाम्निचैंद्रे त्वपशेगते संप्रतिसंभवोस्य मानार्धयोगाधिकमिंदुभान्वोः क्रांत्यंतरंचेन्नतदैषदोषः २४

स्फुरदद्भूषणभूषणकांतयोयदिभवंतिमृगांकमृगीदृशः करमवाप्यवरः सुतनोस्तदासुभरसंभरसंभृतमस्तु

येत्यादयः प्रयोगाः छंदस्येव तत्रसर्वेविधीनांविकल्पविधानादितिप्रसादकारादयः यत्तु श्रीभागवते ततत्रसौहृदं धर्मसंतोषोभूतसौहृ
दं इत्यादिषु दृश्यते तदपिसंदिग्धं पुराणानामपिछांदसत्वात् विशेषेण श्रीभागवतस्य अतोभाषायां सौहृदमिति प्रयोगः कथंयुज्य
तेयदितु ग्रंथकृतामयुक्तस्तर्हि कथंचित्व्रिद्धनिमात्रं चिंत्यते ओर्गुणइत्यनेन संज्ञापूर्वकस्यविधेरनित्यत्वस्यज्ञापितत्वात् उभयपद
वृद्धेरनित्यत्वमिति एववसुभेचलसौहृदयस्त्रियोद्वेष्याइतिवराहोक्तमपिनिवेदितव्यं १ ननुचंद्रराश्योर्मेलकस्तर्हितल्लवाश्रये
रपिकथन्नमेलकइत्याह २ योद्गतासौहृदं मित्रत्वं चंद्रराशिवशाच्चंद्रराश्यधीनमेवेतियदुक्तं तत्सूक्ष्मयोर्नवांशयोरपिकथन्न

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

वि॰वृ॰ स्यात् जन्मनियद्राशौ चंद्रः स जन्मराशिरित्युच्यते तयोश्चेन्मेलको विलोक्यते तर्हि तदंतर्गतयोः सूक्ष्मयोश्चंद्रनवांशयोरपि कथं न मेल अ॰

टी॰ क इत्याक्षेपः अपिः समुच्चये अत्रोत्तरं एवमस्त्विति चेदित्यध्याहारः एवं चेदस्तु भवतु तर्हि कर्कटे कर्कटराशिस्थे विधौ मकरांशगे म १

१४ करनवांशस्थिते सति उत्तरायणं कथं न स्यात् अयनं हि राशिवशादेव न तु नवांशवशादिति प्रसिद्धं अतो राश्योरेव मेलक इति २

अथ राशिवशादेवायनमित्यत्र प्रमाणमाह यस्मात्कारणान्मासषट्कं षण्मासपर्यंतं दक्षिणादक्षिणस्यां दिशि दक्षिणादाच् तद्धि

तश्चासर्वविभक्तिरित्यव्ययं आदित्यः सूर्यः एति गच्छति ततस्तस्मात्कारणात् इति एवंविधमयनं स्मृतिर्जगौ जगाद यस्मात्कारणा

ते २५ इति श्रीविवाहवृंदावनेन लग्नशुद्धिं प्रथमोध्यायः १ अथ कालमीमांसाध्यायः जन्मलग्नमिदमंग

मंगिनां मेलिरे मनइतो दुमंदिरं सौहृदं हि मनसोनंदेहयोर्मेलकस्तदयमिंदुगेहयोः १ चंद्रराशिवशमेव सौह

त्सूर्ये मासषट्कं दक्षिणां दिशं गच्छतीतस्मात्तन्मासमयनं स्मृतिर्जगादेत्यर्थः एवं सयुक्तिकमागमप्रमाणमुक्त्वा प्रमाणांतरमाह मूलसं

क्रमेति नवांशरूपे सयामूलराशिः विवस्वतः सूर्यस्य मूलसंक्रमो राशिसंक्रांतिः तत्समांतत्सदृशौ कृतवोवसंतादयोपि सत्स्वभंगिस्वी राम॰

यस्वीयरचनां चिन्हमितियावत् बिभ्रति धारयंति वसंते पुष्योद्गमादि ग्रीष्मे निदाघादि इत्यादीनि यान्यृतुचिन्हानि तानि रविराशि १४

संक्रमवशेष्वेव तत्तदृतुमत्यसंदृश्यंते अतो राशिवशादेव मेलक इति सिद्धं ३ अथ पुनस्तमेवाह रथ्यांदत्तादिनस्वस्यादिवसनसप्तमस्य

विरहे वियोगे सति करग्रहणस्य नालाभे सतीत्यर्थः तस्य करग्रहणलग्नस्य उदये क्षणेषु मुहूर्तेष्वपि करग्रहः किन्नेष्यते धिष्ण्ये तस्मि

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

तस्य भस्योदयो वेति यस्मिन् धिष्ण्ये यच्चक्रमोपदिष्टन दैवसेन मुहूर्ते पिकार्यमिति च कथितेपि दिनतस्त्रात्ताभेसति तद्दुदयेन मुहू
र्तेवा करग्रहोमहद्भिः कथं नेष्यते अपितु नेष्यत इत्यर्थः अतो खिलं समस्तं जगतः फलं स्थूलमेवमिति एवं चेत्तर्हि सूक्ष्मफलस्यग
तिमाह तद्विशेषयतीति तत्र स्थूलफलं सूक्ष्मतागतिः सूक्ष्मफलस्यगतिः विशेषयति विशेषं करोति सूक्ष्मफलस्थूलस्य विशेष
तां करोतीत्यर्थः ४ तर्हि सूक्ष्ममेव फलं प्रमाणं कथं न स्यादित्याशंकायामाह स्वागतां प्रतिवेलं तत्तद्दूहनविकल्पसमूहैः अव्य
वस्थितिः स्यादिति हेतोः मुनीन्द्राः स्थूलमप्यनुसरंति केवलमणीयो न रमणीयमित्यन्वयः वेलां वेलां प्रतीति प्रतिवेलं वीप्सा

दं सूक्ष्मयोरपि न किं नवांशयोः एवमत्र मकरांशगे विधौ कर्कटेपि किमु नोत्तरायणं २ मासषट्कमय
नं च दक्षिणादित्यसन्निति दिनि श्रुतिर्जगौ मूलसंक्रमसमां विवस्वतः स्वस्वभं गिमृतवोपि विभ्रति ३

यां व्ययीभावः तस्यास्तस्या वेलायाऽऽहृहं नं वितर्कस्तस्य विकल्पास्तु स्मादयः तेषां समूहास्तैः कृत्वा अव्यवस्थितिरव्यवस्था स्यादि
ति हेतोर्मुनीन्द्रा गर्गादयः स्थूलं फलं वर्षमासतिथ्यादिकमप्यनुसरंति तत्र प्रवर्त्तन्ते केवलमणीयः सूक्ष्मतरं फलं न रमणीयं न
स्यात् अतिशयितमणु अणीयः सूक्ष्मफलस्यानवस्थानात्स्थूलेष्वपि प्रवर्त्तते इति भावः एतदपि स्पष्टयिष्यति ५ एवं चे
त्तर्हि सूक्ष्मफलमकिंचित्स्यात्तत्राह स्वागता भुवि पृथिव्यां वर्त्तमानः अयं भूयान्बहुतरो जनः जाना वेकवचनं एकधि
ष्ण्यदिनः जोपि एकनक्षत्रतिथि जातोपि भिन्नफलभाक् विसदृशफलभागी भवतीति प्रत्यक्षं तेन कारणेन सूक्ष्मनापि

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰वृं॰ गरिष्ठागरीयसी स्यात् अपिः समुच्चयेन हि स्थूलं त्याज्यं स्यात्तत्राह साचेति सा च सूक्ष्मता मूलं स्थूलं अनुरुध्य अनुसृत्य विधेया स्यात् । अ॰
टी॰ स्थूलानुसारेण सूक्ष्मतापि ग्राह्येत्यर्थः ६ कथं स्थूलमनुरुध्य सूक्ष्मता ग्राह्येत्येतदर्थे सूक्ष्मताया अनवस्थानं प्रकटयति उपजातिकौ २
१५ सूक्ष्मयोरपि न किं नवांशयोरिति नवांशः किल सूक्ष्म उक्तः नवांशादपि द्विरसांशो द्वादशांशः सूक्ष्मः द्वौ च रसाश्च तैः त्र्यंशः आदौ द्व्यंशः
ततस्तस्य रसांश इति कृत्वा द्वादशांश एव सिद्धः यथा सूर्यनंदैर्हतं तत्स्यादायुर्मासादिकं स्फुटमित्यादिषु सूर्यहतं सप्तनंदहतमिति व्याख्य
यतेनतु द्वादशाधिकनवशतैर्हतं तत्रापि अत एव बृहज्जातके चंद्रोपगद्विरसभागसमानरूपमिति तद्व्याख्यातस्तस्माद्द्वादशांशाद

किं दिनस्पृष्टिविरहे करग्रहो नेष्यते तदुदयस्फुटोप्यपि स्थूलमेवमखिलं जगत्फलं न द्विषेषयति सूक्ष्मतागतिः ७

अव्यवस्थितिरितिप्रतिवेलं तत्र दूहनविकल्पसमूहैः स्थूलमप्यनुसरंति कृतींद्राः केवलं नरमणीयमणीयः

पित्रिंशल्लवलिप्त्यंशांशः सूक्ष्मः ततोपि लिप्ताकला सूक्ष्मा इतीत्यनेन प्रकारेण अवलिप्तवाच्या अवलिप्ता वाकुर्येषां तेन तथा एवमुक्त
वतामित्यर्थः पुरुषाणां दृक्दृष्टिः कस्मान्नियतो समस्या समाधानं एतु गरूतु समस्तनसमस्याकयप एवं सूक्ष्ममुक्तवतां दृष्टेर्न कुत्रा
प्यवसानमस्ति सूक्ष्मस्य अपर्यवसायित्वादिति भावः ७ एवं सूक्ष्मकालानां कलने सति सिद्धांतमाह इंद्रवज्रा स किल कालस्यैक राम॰
देशः अत्यंतसूक्ष्मः अतिदुर्लक्ष्यः येन कृत्वाखिलानां प्राणिनां फलर्द्धिः फलसंपद्विद्गुणभेदेन प्रीता स्यात् भिन्नभिन्नेति यावत् १५
कि दिविदिभिदांकुरः सः सूक्ष्मकालः अस्मादृशां वयमिव दृश्यं ते तेस्मादृशः तेषां चर्मचक्षुषां दृग्विषयो दृष्टिगोचरो न स्यात् ।

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

दुर्ज्ञेयइतियावत् तथाचनारदः स्वस्येतरेस्फुरवासीनयावत्स्यंदतिलोचनं तस्यत्रिंशत्तमोभागस्तत्परः परिकीर्तितः तत्पराच्छतशोभाग स्त्रुटिरित्यभिधीयते त्रुटेःसहस्त्रभागोयोलग्नकालःसउच्यते देवोपितंनजानातिकिंपुनः प्राकृतोजनःसकालोप्यन्यकालोवापूर्वकर्मवशाद्भवेत् निमित्तमात्रंदैवज्ञस्तद्दशाच्चशुभाशुभमिति सिद्धांतयतितस्मादितितस्मात्सूक्ष्मकालस्यादृग्विषयत्वात् सर्वजनानांव्यवहारसिद्धिःमूलानुकूलास्यात् मूलस्यानुकूलामूलानुकूलास्थूलानुसारिणीवत्सरमारभ्यनवांशपर्यंतमित्यर्थःअस्यान्यसाध्यत्वात् ८ अथानयोःस्थूलसूक्ष्मयोःसमाधानमाह मालिनी इत्यनंतरोक्तेसतिमूलेस्थूलमध्येयदिसूक्ष्मभावांशल।

भिन्नभिन्नफलभाग्भुविभूयानेकधिष्ण्यदिनजोपिजनोयं सूक्ष्मतापिनतुतेनगरिष्ठासाचमूलमनुरुध्य विधेया ९ सूक्ष्मोनवांशाद्विरसांशएवत्रिंशांशकस्तत्क्षयतोपिसूक्ष्मः ततोपिलिप्तेत्यवलिप्तवाचांदृगेतुक

ब्धिर्लभस्त्वेत्स्यात् तत्रदाखिलंसर्वमपिसिद्धंफलितंस्यात् एवंस्थूलंतदंतर्गतंसूक्ष्मंचविलोकनीयमित्युक्तं अन्यथाबाधकमाह नास्तीति चेन्मूलस्यस्थूलस्यलब्धिर्नास्तितदातदुभयलवनाशःस्यात् तस्यफलजातस्योभयलवौस्थूलसूक्ष्मलक्षणौयौविभागौ तयोर्द्वयोरपिनाशःस्यात् कस्मात् अणूनामतिसूक्ष्माणांदुर्गमत्वात् दुःखेनगम्यंतेज्ञायंतेतानिदुर्गमाणितेषांभावस्तत्त्वंतस्मा त् अतोनवांशपर्यंतस्सूक्ष्मकालस्यमनुष्यगम्यत्वात् तत्पर्यंतंस्थूलांतर्गतंसूक्ष्मंविचारणीयमितिसिद्धं अतोनवांशयोरपि मेलकःस्यादितिनवांशमेलकस्यजनेव्यवहारोनास्तीत्येतत्सम्प्रपंचंवक्ष्यति एतदुक्तंमयामनसिसमाहितमित्याह परि

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰वृं॰ पतितिरिति इतीयंकालमीमांसयाकालविचारणेनतोस्माकंपरिणतिः रूढास्फुरितात्कालस्यमीमांसाविचारणंमानतैः स्वार्थेसूनृत अ॰
दी॰ नः मन्यतांनाज्ञावैश्मच कालविचारणेक्रियमाणे अस्माकसयंवृद्धिपरिणामोरूढइत्यर्थः ९ इतिश्रीसकलागमाचार्यवर्यश्रीकेश २
१६ वसांवत्सरात्मजगणेशविरचितायांविवाहवृंदावनटीकायांविवाहदीपिकायांकालमीमांसाध्यायोद्वितीयः २ एवंप्रासंगिकंका
लमीमांसनेननिरूप्यअधुनाप्रकृतंमेलकाध्यायंनिरूपयति तत्रादौराशिमेलकंसोपपत्तिकमाह उपजातिकाव धूवराणांस्त्रीपु
रुषाणांजन्मर्क्षेयोर्जन्मराश्योर्द्विर्द्वादशः सरव्यविधिःमैत्रविधिनेष्टः नलक्षितः पूर्वमुनिभिः द्वौचद्वादशचद्विर्द्वादशस्तयोःपू

स्यांनियतौसमस्यां ७ अत्यंतसूक्ष्मःसकिलैकदेशोयेतात्विस्तानांभिदुराफलर्धिः नास्मादशांदृग्विषयः सत
स्मान्मूलानुकूलाव्यवहारसिद्धिः ८ इतिसतियदिमूलेसूक्ष्मभावाशालक्षितस्तदखिलमपिसिद्धंनास्तिचे
न्मूलसंपत् तदुभयलवनाशाद्दुर्गमत्वाद्पूनांपरिणतिरितिरूढाकालमीमांसयानः ९ इतिश्रीविवाहवृं

वृणो द्विर्द्वादशः एकस्यराशेःसकाशादन्यराशिर्द्वितीयस्तस्माद्प्यन्यो द्वादशइत्यर्थः अत्रहेतुः व्ययेनवित्तमितियतोव्ययेसति राम
वित्तंनस्यात् व्ययोद्वादशस्थानंवित्तंद्वितीयंयत्रव्ययस्तत्रकुतोधनमिति अनेनैवात्रदरिद्रत्वमितिफलंचसूचितंभवति एवं १६
तपसीत्यादिहेतुनापंचनवेत्यादिपंचनवचअष्टषट्चपंचनवाष्टषट् तेषांपूरणाःपंचनवाष्टषष्ठः पंचमनवमोष्टमष
ष्ठइत्यर्थः तपसिसतिअपत्यंनस्यात् तत्रब्रह्मचर्यादिनियमविधानात् तपोनवमस्थानंअपत्यंपंचमं अतोनपंचमन

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वमः सख्यविधिः अत्रानभत्यतेतिफलमपिसूचितं द्विषतिशत्रौसति आयुर्नैवस्यात् शत्रुसंनिध्येकथमायुरितिशत्रुः षष्ठं आ
युरष्टमं अतोष्टमषष्ठेन सख्यविधिः अत्रनायुष्यमितिफलंच अर्थाच्छेषाश्चतुर्दशमतृतीयैकादशोभयसप्तमाः शुभाः स्कराशि
स्त्रेविशेषं वक्ष्यति १ अथास्यापवादं ताराप्रैत्रं चाह स्वागनायदा क्षेत्रयोराश्योः सुहृद्भिन्नपतित्वं दृश्यते तत्तदा अखिलेषु द्विद्वाद
शादिषु अपि मेलः सख्यं स्यात् मेलनं मेलः किंपुनः शुभेषु चतुर्थदशमादिषु सुहृतौ अभिन्नौ च सुहृद्भिन्नौ तौ च तौ पती च तं
योर्भावस्तत्त्वं पत्योः सुहृत्त्वं एकत्वं चेत्यर्थः राश्यधिपास्तत्सुहृत्त्वं च वक्ष्यति तथा चोक्तं नवर्णशुद्धिर्नगणोन योनिर्द्विद्वाद

द्वावने कामीमांसा १ ध्यायो द्वितीयः २ अथ मेलकाध्यायः व्ययेन वित्तं न तपस्य पञ्चं नायुर्द्विषट्के च व
धूवराणां द्विद्वादशः पंचनवाष्टषष्ठो जन्मर्क्षयोः सख्यविधिर्न दृष्टः १ दृश्यते सुहृद्भिन्नपतित्वं क्षेत्रयो

शे चैव षडष्टके पि वैरे पि दूरे यदि वा त्रिकोणे मैत्री यदि स्याच्छुभदो विवाह इति २ अथ ताराप्रैत्रं भीरुभादितिभीरुः स्त्री विशेषास्त्वं
गनाभीरुः कामिनी वामलोचनेत्यभिधानात् तस्या नक्षत्रमारभ्य वरतारा वरनक्षत्रं अचलं पंचतृतीया क्रमेण शोकवैरविपदे स्या
त् इदं कल्पं जीवनं अचलाश्च पंच च चत्रयश्च तेषां पूरणी तथा सप्तमी पंचमी तृतीया चेत्यर्थः सप्तमी शोकाय पंचमी वैराय तृ
तीया विपद इति एतत्त्रयमनवके एवं पुनर्द्वितीये तृतीये पि केचिदेवमुभयभाभ्यामपीच्छंति तथा चाहुः पुंसस्त्वाद्गणयेद्या
वत् कन्यर्क्षं कन्यभादपि वरं नवहृच्छेषं नाराः संतिपरस्परमिति एतदन्यदेशेषु प्रसिद्धं ग्रंथकृतोक्तं तत्र देश एव २ अथै

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



कनक्षत्रे एकराशौ च विशेषमाह उपजातिका यदि नृनार्योर्वरवध्वोः भिन्नराश्योः सतोर्नक्षत्रमेकं भवति अथवा अभिन्नराश्योः 
एकराश्योरपि भिन्नमृक्षं स्यात् अपिर्वार्थे तदानि विडाअतिशयिता नृनार्योः प्रीतिः स्यात् तत्र नाडीदोषोपि नास्तीत्याह चेत्कृत्तिके
ति चेत्कृत्तिकारोहिणिवन्न तदा नाडी न स्यात् यथा कृत्तिकारोहिण्योरेकनाडीत्वेपि एकराशौ सति नाडीदोषो न स्यादित्यर्थः अनेनै
वगणदोषोपि निरस्तः एवं श्रुतनारकापूर्वाभाद्रपदादिष्वपि तथा च गर्गः एकराशिं विना नाडीयोगमादौ विवर्जयेत् नदोषस्त्वे
कराशिस्थे भकूटेन्येषु मृत्युद इति भृगुरपि दंपत्योरेकराशिश्चेत् पृथगृक्षं यदा भवेत् वसिष्ठोक्तो विवाहः स्याद्गणनाडीनचिंत

त्वदर्विलेष्वपि मेलः भीरुभाद्रचलपंचतृतीयाशोकवैरविपदेवरताः २ नक्षत्रमेकं यदि भिन्नराश्यो
रभिन्नराश्योर्यदि भिन्नमृक्षं प्रीतिस्तदानीं निविडा नृनार्योश्चेत्कृत्तिकारोहिणिवन्न नाडी ३ पराशरः॥

येदिति ३ एतद्बहुमतमुक्त्वा मतांतरमाह उपजातिका एकौ च नौ क्षराशी न था एकनक्षत्रे एकराशौ एकत्र सत्यपीति अपिः
संभावनायां नवांशभेदान्नक्षत्रचरणभेदात्सौमनस्यं सुहृत्त्वं पराशरः प्राह एकनक्षत्रे एकराशौ च शुभमिति बहुमतं प्रागुक्तं तत्रा 
पि चरणभेदे सति शुभमिति पराशरमतमित्यर्थः तत्राप्येकांशत्वे चरणैकत्वेपि वशिष्ठ्यः सौमनस्यं प्राह एतद्दूषयिष्यति अत्र
नक्षत्रैक्ये नाडीदोषो नास्तीत्याह नैकत्रेति द्वयोरपि नक्षत्रयोरेकत्र एकस्मिन् स्थाने पिंडे गोलके सति किल निश्चयेन नाडीवे
धो न स्यात् द्वयोर्व्यवहितयोः सत्येव वेधः स्यादेकत्वे तु न स्यादिति भावः नाडिरितीकारांतः कृदिकारादक्तिन इति ङीवे तोय

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

स्ति ४ अथनाडीदोषाभावेत्रदृष्टांतमाह उपजातिकायथाहि अग्निः आत्मतनुंस्वमूर्तिंतेजोरूपांनदहति अपिचदर्शनीयो
रमणीयः पुरुषः स्वदृष्टेर्द्रष्टानस्यात् कर्मणिषष्ठी चक्षुष्मानपिद्रष्टास्वदृष्टिंनपश्यतीति तथाएकत्रपिंडेनाडीवेधोनस्यादि
तिपूर्वेणान्वयः अथैकांशकत्वेदोषमाह एकांशकत्वेइति एकांशकत्वेचरराशिकत्वेसतितुभर्तृभार्याव्यवहारसिद्धिर्नस्यात् कु
तः समप्रभावात् समानसामर्थ्यात् अयंभावः नृनार्योरेकांशकत्वात्समानसामर्थ्यं तस्मिन्सति अयंभर्तानदधीनेयंभार्येतिसं
र्वव्यवहारोगार्हस्थ्यादिरूपोनसंभवतीति अतएकांशकत्वेसौमनस्यंनस्यादितिभावः ५ अथनाडीवेधमाह वसंततिलका रु

प्राहुनवांशभेदादेकर्क्षराश्योरपिसौमनस्यं एकांशकत्वेपिवसिष्ठशिष्योनैकत्रपिंडेकिलनाडिवेधः ४
नाग्निर्दहत्यात्मतनुंयथाहिद्रष्टास्वदृष्टेर्नहिदर्शनीयः एकांशकत्वेपिसमप्रभावान्नभर्तृभार्याव्यव
हारसिद्धिः ५ रुद्रार्यमेंद्रवरुणाद्द्वयमश्विनीचविश्वाग्निवायुफणिनांयुगमन्त्यभंचशेषाणिचेतिनवकं

द्र आर्द्रा अर्यमाउत्तराफाल्गुनी इंद्रोज्येष्ठावरुणः शततारका एतानिचत्वार्यारभ्यप्रत्येकंद्वयं एवमष्टौ अश्विनीचएकाकिनीएवं
नवमेकोनवकः विश्वउत्तराषाढा अग्निः कृत्तिकावायुः स्वातीफणी आश्लेषा एवमारभ्यप्रत्येकंयुग्मं एवमष्टौ अंत्यभं रेवतीच
एकाकिनीएवंद्वितीयोनवकः शेषाणि पूर्वाफाल्गुनीचित्राधनिष्ठाभरणीमृगपूर्वाषाढानुराधापुष्योत्तराभाद्रपदाः अयंतृतीयो
नवकः इतिनवकत्रयंस्यात् वधूवरयोर्जन्मोडुनीजन्मनक्षत्रेएकपातेएकस्मिन्नवकमध्येप्राप्तेसतिनाडीस्यात् किमर्थंवरव

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰वृं॰ धूनिधनायद्वयोरेकनाड्यां मृत्युः स्यादित्यर्थः अत्र रुद्रादिदेवतानिर्देशेन तत्तन्नक्षत्रमार्द्रादि गृह्यते लोके हि स्वामिशब्दं से अ॰
टी॰ वकेषु प्रयुंजाना दृश्यन्ते अतो देवताशब्दस्तन्नक्षत्र इति ध्यादिषूपचर्यन्ते तथाविधवृद्धप्रयोगदर्शनाच्च नागो द्वादशनाडी ३
१८ भिर्दिक् पंचदशभिस्तथा भूतोष्टादशनाडीभिर्दूषयन्त्युत्तरां तिथिमित्यादिना गः पंचमी दिग्दशमी भूतश्चतुर्दशीति ६ अ
थ त्रिनाडिकाचक्राभिप्रायेण नाडीवेधमुक्तः के चित्तु त्र्यंघ्रिभद्व्यंघ्रिभोत्पन्नकन्यायाश्चतुःपंचनाडीचक्रे वेधमाहुः
तन्मतं दूषयति उपजातिकात्रयमश्वद्वौ च अंघ्रयो यस्य त्रिद्व्यंघ्रि तच्च तन्नक्षत्रं तत्र भवतीति त्रिद्व्यंघ्रिनक्षत्रभूतस्याः कुमा

त्र्यमेकयातेजन्मोडुनीवरवधूनिधनायनाडी ६ प्रमीयमाणोपि मतैर्मुनीनां त्रिद्व्यंघ्रिनक्षत्रभुवः कुमा
र्याः नाडी चतुःपंचतयस्य पक्षो न क्षोदवीथीविषयत्वमेति ७ अश्वेभाजोरगाहि प्रवरवनकरिपवोमेषवो

र्याः क्रमान्नाडीचतुःपंचतयस्य चत्वारश्च पंच च चतुःपंच ते एवावयवा यस्य तच्चतुःपंचतयं नाडीचतुष्टयं नाडीपंचकं चेति संख्या
या अवयवे तयप् तस्य पक्षः मुनीनां हारीतादीनां मतैः प्रमीयमाणोपि प्रमाणं प्राप्नुवन्नपि आगमप्रामाण्यं प्राप्तोपि क्षोदवी राम॰
थीविषयत्वं क्षोदस्य वीथी पदवी तस्या विषयत्वं विचारमार्गगोचरत्वं नैति न गच्छति त्र्यंघ्रिभं कृत्तिकादिकं द्व्यंघ्रिभं मृगशी १८
र्षादिकं तथा च हारीतः त्र्यंघ्रिभे द्व्यंघ्रिभे कन्याजाता यागणाये त्क्रमात् वन्हिभादिंदुभान्नाडीं चतुःपंचसु पर्वस्विति अ
स्य विषयमाह वृद्धगर्गः जांगले चतुर्माला पांचाले पंचमालिका त्रिमाला सर्वदेशेषु विवाहे ऋषिसंमतमिति एवं सो

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

दृक्रियमाणोस्पस्योन्यदेशे व्यवहारं न प्राप्नोतीत्यर्थः ७ अथ योनिमैत्रमाह स्रग्धरा अश्वस्तुरगः इभो हस्ती अजो मेषः उरगः सर्पः पुनरहिः सर्पः श्वा शुनकः श्वनकरिपुर्मूषकः स्वान्तुर्मार्जारः मेषअजः पुनरोतुर्मार्जारः द्विः द्विवारं आखुर्मूषकः गौर्धेनुः कालीमहिषी व्याघ्रः प्रसिद्धः पुनः कालीमहीषीपुनः पशुरिपुर्व्याघ्रः हरिणो मृगः पुनरेणो मृगः पुनः कीशो वानरः सिंहः प्रसिद्धः तुरगोश्वः पुनर्मृगपतिः सिंहः छागो मेषः पुनर्मतंगो हस्ती इहैकत्वे क्लीवत्वं एवं क्रमेण अश्विनीतः अश्विनीमारभ्य योनिः स्यात् तायोनिः सवैरा नेष्टा कयोः वरयुवतिनृपामात्ययोः वरश्च युवतिश्च वरयुवती नृपश्च अमात्यश्च नृपामात्यौ वरयुवती च नृपामा ।

तु द्विवारखुर्गौ कालो व्याघ्रकालीपशुरिपुहरयौ राश्व कीशाः क्रमेण हैवभ्रू कीशसिंहौ तुरगमृगपति छाग
मातंगमेवं नेष्टा योनिः सवैरा वरयुवतिनृपामात्ययोरश्विनीतः ८ त्रियुग्मी रोहिण्या सह शिवयमसैं नरिस्स

भौ चनयोः पृथक् पृथक् द्वित्वविवक्षायां न बहुत्वं अश्विनीत इत्यत्र न स्त्रिला[illegible] त्वात्तसिलसुच इत्यनेन पुंवद्भावे प्राप्ते उक्तपुंस्कत्वामाबान्न स्त्रीप्रत्ययलोपः अत्र योन्योर्वैरं लोकाज्ज्ञेयं गोव्याघ्रं गजसिंहमित्यादिना ८ अथ गणमैत्रमाह शिखरिणी त्रयाणां युग्मानां समाहारस्त्रीयुग्मी फल्गुनीद्वयं आषाढाद्वयं भाद्रपदाद्वयं चेति रोहिण्या सह रोहिणी चेत्यर्थः शिवयमसैं आर्द्राभरण्यौ श्रयंन सत्र नवको नरि मनुष्ये भवेत् श्रुतिः श्रवणः स्वाती प्रसिद्धा मित्रो नुराधा अदितिः पुनर्वसुः गुरुः पुष्यः करो हस्तः अंत्यं रेवती अश्वि अश्विनी शशिभं मृगशिरा श्रयं नवकः सुरे देवे भवेत् परं चित्रा ज्येष्ठा धनिष्ठा विशाखा मूलं कृत्तिका

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

शानतारकामघाश्लेषाइतीदं नवकं दैत्ये भवेत् एवं गणत्रयं अस्य प्रयोजनमाह मृत्युरिति दनुजमनुजानां राक्षसमनुष्याणां
मृत्युः नृनार्योः राक्षसमानुषगणयोः सतोर्मृत्युः स्यादित्यर्थः निर्ऋतिनयनानां राक्षसानां अनिमिषैर्देवैः सह स्वैरमतिशयितं
वैरं स्यात् कृपरिणये विवाहे अर्थाच्छेषाणां मित्रत्वं ९ अथ स्वाभाविकं राशिवैरं तथावश्यमेत्रं चाह शार्दूलविक्रीडितं
चापाजौ धनुर्मेषौ वृषभेण सह नित्यद्विषौ नित्यविरोधिनौ चापेन अजेन वा सह वृषभो नित्यशत्रुरित्यर्थः एवमुत्तरत्रापि कुं
भमिथुनौ कर्केण मेषस्त्रियाशैलाग्नीतुलामिथुने सविषेण वृश्चिकेन शैलाग्नी इत्यत्र संख्यासंज्ञया तत्संख्यौ राशी विवक्षि-

रेत्रुनिस्वातीमित्रादितिगुरुकरांत्याश्विवस्रशिभं परं दैत्ये मृत्युर्दनुजमनुजानामनिमिषैः सहस्वैरं वैरं नि
र्ऋतिनयनानां परिणये ९ चापाजौ वृषभेण कुंभमिथुनौ कर्केण मेषस्त्रियाशैलाग्नीसविषेण कार्मुकहृ

तौ अतोनवहुत्वं यथानिगमचाक्येयुग्माग्नियुगभूतानां षण्मुन्योर्वसुरंध्रयोरिति षण्मुन्योः षष्ठीसप्तम्योः वसुरंध्रयोः अष्टमीनव-
म्योः एवमत्रापि कार्मुकहरी धनुःसिंहौ नक्रेण मकरेण तद्वन्नित्यद्विषौ कुंभतुले झषेण मीनेन एते द्विर्द्वादशषड्ष्टकयोर्मध्ये नि- राम·
त्यवैरिण उक्ताः शेषाणां मैत्रं अत्रान्यहेतुमाह शत्रूमंदसितौ इत्यादि सत्याचार्यमते यदधिपत्योः शत्रुत्वमस्ति न एवैतेन पठि- १९
ना· शेषाः श्रेष्ठाः तथा च तद्वाक्यम् द्विर्द्वादशे मेषझषौ वृषमिथुनावित्यादि षड्ष्टके च सिंहो मीनयुत इत्यादि ग्रंथकारस्तु
सत्याचार्यमतममेत्रमसहमानो मुहेतुं परित्यज्य राश्योरेव वैरं नित्यद्विषावित्यनेनावदत् ननु तदधिपतिवशेनेति ग्रंथ

Digitized by Sarayu Trust Foundation Delhi and eGangotri.
CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

कारस्याशयः अथवैश्यमैत्रवशगाइत्यादि सिंहंविनान्येसर्वेराशयः नृणांमनुजानांतुलामिथुनादीनांवशगाःस्युः वशमधीनंग
च्छंतितेनतथा तेषांनृणांभोज्याःलभ्याःजलचारिणोमीनादयःस्युः हरेःसिंहस्यवृश्चिकंविनासर्वेराशयःवशगाःस्युःशेषंवश्य
वश्यंलोकप्रसिद्धंज्ञेयं २० अथैषांगुणदोषाणांनिर्णयं विवक्षुस्तावत्तत्रकिंचित्स्वकौशलंदर्शयति उपजातिका धुरिभा
रेमुख्येतियावत् कुंभहर्योःकुंभसिंहयोः राशिमैत्रीस्यात् सप्तमसप्तकत्वात् तयोःराश्योःग्रहौस्वामिनौशनिरवीतयोःवि

रीनक्रेणनित्यद्विषौनहृत्कुंभतुलेझषेणवशगाःसिंहंविनान्येनृणांतद्भोज्याजलचारिणोहरिवशाःसर्वे
विनावृश्चिकम् १० स्याद्राशिमैत्रीधुरिकुंभहर्योःकरग्रहस्तत्रहविग्रहेपि नस्यामपत्यांमृगराजमीना
वप्यादृतौनतद्ग्रहयोःसुहृत्त्वे ११ पत्न्योविरोधेसतिभृत्ययोःस्यान्मेलोप्यमेलस्तदलंभमैत्र्या अत्रोच्य

ग्रहेवैरेपिकरग्रहःस्यात् तस्यांराशिमैत्र्यांअसत्यांषडष्टकत्वान्मृगराजमीनौसिंहमीनावप्यादृतौ करगृहेगृहीतौतत्रहे
तुः कस्मिन्सतितद्ग्रहयोस्तत्स्वामिनोःगुरुसूर्ययोःसुहृत्त्वेमैत्रेसतिग्रहमैत्रेसुरगुरुरित्यादिनावश्यतिराशिमैत्रग्रहमैत्र
योरन्यतरलाभेशुभमितितात्पर्यार्थः ११ अथाक्षिपति इंद्रवज्रा पत्न्योःस्वामिनोर्विरोधेवैरेसतिभृत्ययोस्तत्सेवकयोर्मेलेमैत्रे
सत्यपि अमेलः अमैत्र्यंस्यादितिलोकप्रत्यक्षं अतोग्रहवैरेसतिराशिमैत्र्यंनमुख्यमितिभावः अत्रास्मिन्विषयेउच्यते उत्तरंदी
यते एकस्यराज्ञःसेनानरयोःसेनासंबंधिपुरुषयोर्मिथःपरस्परंविग्रहाद्विरोधात् वधोघातःकिंनस्यात् अपितुस्या

Digitized by Sarayu Trust Foundation Delhi and eGangotri.
CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰ रं॰ दिक अतोराशिमैत्रमुख्यमित्युक्तं १२ अथमत्युत्तरं उपेंद्रवज्रा स्वामिनि अपश्यन्ति तयोः सेनानरयोर्वधो मिथःस्यात् स्वामिसमस्सं अ॰

टी॰ नस्यादेवेति इति चेत्तर्हि गृहेश्वराणागृहस्य धिपानांकिमदृष्टमस्ति अपितुनैः सर्वंदृष्टमेवदेवतात्वात् यतुदशामतृतीयेद्रस्या २

२० दिनादर्शनादृशेनसुतेनतत्फलार्थमेव वास्तवंतुगृहे श्वराणांकिमदृष्टमस्तीतिअतः कारणात्प्रभुसरव्यस्वामिमैत्रमेवा

धिकमितिचेत्तेनराःसमसत्रकस्यकुंभसिंहाविस्यादिकस्यकागतिः प्रसोगम निकाकथ्यतामिति १३ सिद्धांतरूपांगतिमाह

उपजातिका स्वभावमैत्र्यादिषुचतुर्षुमध्येपूर्वेपूर्वेगमेपूर्वपूर्वालाभेसतिपरः परःउत्तरोत्तरःगवेष्यः अन्वेषणीयः आदौराश्योः

स्वभावमैत्री समस्स सकादिकाविलोक्यातदलाभेस्वपस्त्योःतद्राश्यधिपयोःसखितानस्यगृहसख्यस्यालाभेवशित्वराश्योर्वश्यत्वंव

तेकिंनमिथोवधःस्यादेकस्यसेनानरयोर्विरोधात् १२ अपश्यतिस्वामिनितद्गृहेश्वराणा

किमदृष्टमस्ति अतोधिकंचेत्प्रभुसरव्यमेवनतागतिः कासमसमकस्य १३ स्वभावमैत्रीसखि

श्यालाभेन्योन्यंभयोर्नेसत्रयोर्योनिसुहृदिः योनिवैराभावःचेत्सुगपच्चतुर्णामपिलाभस्तदाहलेत्रिवर्गीस्यात् त्रिवर्गो

धर्मकामार्थैरित्यमरः धर्मादयःकरगताःस्युरितिएवंपूर्वपूर्वस्यैकस्य अलाभेसति उत्तरोत्तरलाभेनतदपवादःउक्तःचतुर्णा राम॰

मपिलाभेसतिशुभंत्रयाणांद्वयोर्वालाभेनारतम्यंकल्प्यं १५ अथस्वाभाविकगृहमैत्रस्यापितत्कालसख्येनन्यूनाधिक २०

तामाहद्वंद्ववज्रा प्रसूतोजन्मकालेयस्माद्ग्रहात्पार्श्वयोः केंद्रद्वयंपार्श्वकेंद्रद्वयांतमयोदीकुल्यंस्यापार्श्वकेंद्रद्वयं तत्र

गच्छंतितेआपार्श्वकेंद्रद्वयगाखपांथाःग्रहाःखेआकाशेपर्यंतिगच्छंतितेखपांथाःतेनग्रहेणसार्धंमिथोमित्राणिस्युः

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

एतदुक्तं भवति जन्मकाले यस्मिन् राशौ यो ग्रहः स्थितस्तस्मात्पृष्ठवर्तिके द्वादशमस्थानं भवति अग्रतश्चतुर्थं तदवधित्वेन गतदंतवीर्ति ॥ स्थानानि दशमैकादशद्वादशद्वितीयतृतीयचतुर्थानि एष्वन्यतमस्थाने स्थितौ ग्रहौ तौ तत्कालं मिथो मित्रे स्तः अन्ये तु शत्रव इति तथा च वराहः तत्कालेन दशायबंधुसहजस्वांत्येषु मित्रं स्थित इति प्रसूतिग्रहणं तत्कालस्य ख्यस्य जातकशास्त्रोक्तेः अतोन्यत्रापि तद्वि लोक्यमिति ज्ञेयं तदेवाह न्यूनामपि स्त्रीनरौ च भृत्यराजानौ च तेषां स्त्रीनराणां भृत्यराज्ञां च गृहवशेन या स्वाभाविकी मैत्री तां एतत्तत्कालसख्यं विशिनष्टि विशेषयति कथंभूतामपि न्यूनामपि किं पुनः संपूर्णां तथा हि स्वाभाविको यो मित्रं समः शत्रुर्वा स चेत्तत्का

तास्वपत्योर्वैशित्वमन्योन्यभयोनिसृद्धिः परः परः पूर्वेगमेगवेभ्यो हस्ते त्रिवर्गी युगपद्युतिश्चेत् १४ ॥

आपाम्यकेंद्रहृयगाः प्रसूतौ तत्कालमित्त्राणि मिथः स्वपाथाः न्यूनामपि स्त्रीनरभृत्यराज्ञां तत्कालसख्यं

ले मित्त्रं भवति तदाक्रमेणाधिमित्त्रं मित्रसमः स्यात् चेत्तत्काले शत्रुस्तदा समः शत्रुरधिशत्रुरिति १५ अथ वर्णमित्रमाह इंद्रेत्याय जनयाजनादीनि षट्कर्माणि तानि येषां ते षट्कर्माणः विप्राः तेषां शासितदेवदैत्यौ अधिपौ स्तः शासिताः शिक्षिताः देवदैत्या याभ्यां तौ गुरु शुक्राविन्यर्थः राजन्यानां क्षत्रियाणां समूहो राजन्यकं तस्याधिपती कुजार्कौ स्तः विट्शूद्रयोः क्रमेण चंद्रबुधौ विशां चंद्रः शूद्राणां बु ध इति संकीर्णानां संकरभवानां निषादादीनां पतिः शनिः स्त्रीनृपवधूवरेषु वर्णमैत्री स्यात् तद्यथा राश्यधिपयोर्वर्णौ विलोक्यौ । तत्रोत्तमवर्णः पुरुषः शस्तः समवर्णो मध्यः हीनवर्णोऽधम इति एतदुक्तं ग्रंथकृता स्वदशमसिद्धेः अन्यदेशे तु मीना द्ब्राह्मणपूर्वा व

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

वि·वृं· र्णौकन्योन्नमोवरः श्रेष्ठः मध्यस्थः समवर्णौ नीचोहीनोद्भवः पुरुषद्विड्यं वर्णमैत्रीकेवलं गुणमात्राय न तु मेलक निर्णयाय अतो मेल अ·
टी· कनिर्णयानंतरमेवोक्ता १६ एवं राशिकूटमुक्त्वा तदुपयोगिग्रहमैत्रं जातकोक्तमत्राह एतदादिम्यश्लोकाष्टकं द्रुतविलंबितं रवेः रविमा ३
२१ रभ्यएते सुहृदः अर्थादन्ये शत्रवः रवेः सुरगुरुर्मित्रं अन्ये शत्रवः चंद्रस्य बुधगुरू मित्रे शेषाः शत्रवः भौमस्य शुक्रबुधौ मित्रे अन्ये
शत्रवः बुधस्य रविव्यतिरिक्ताः मित्राणि रविः शत्रुः गुरोः कुजव्यतिरिक्ता मित्राणि कुजः शत्रुः शुक्रस्य रवींदुव्यतिरिक्ता मित्राणि रवीं

विशिनष्टि मैत्रम् १५ षट्कर्मणां शासितृदेवदैत्यौ राजन्यकस्याधिपती कुजार्कौ विट्शूद्रयोश्चंद्रबु
धौ शनिश्च संकीर्णपः स्त्रीनृपुवर्णमैत्री १६ सुरगुरुर्जगुरू कविकौ विदो विरवयो विकुजा विरवींदवः
अशशिसूर्यकुजाः सुहृदो रवेर्यवनसूक्तिरियं न यवीयसी १७ इदमुदीर्य वराह विरोचनौ निजमतेपि न

दूशत्रूशनेः शशिसूर्यकुजव्यतिरिक्ता मित्राणि शशिसूर्यकुजाः शत्रवः इयं यवनाचार्याणां सूक्तिर्न यवीयसी न कनिष्ठा स्थूल दूरसुवेति
यंवादेशः यवनाचार्यमतमिदं महदित्यर्थः १७ कथमिदं महदिति संस्थापयति विरोचनः सूर्यः मिहिरोपि सूर्यः अतो वराहमिहिरः
इदं यवनमतं निजमतेबृहज्जातकादावुदीर्य उक्त्वापि न दूषितवान् पुनर्वाक्यालंकारे अन्यमतं स्वमतेन हि निवेश्यं यदि निवेशितं राम·
दूषितव्यं न हि नो चेन्न हि तत्संमतमेवेति न्यायविदः वदंति च अतः कारणात्स वराहः इदं ग्रहमैत्रीशास्त्रं यवनेषु यथार्थ २९
मेसत्यं वदन् अतिशयितं जयति सर्वोत्कर्षेण वर्तत इति मन्यत एव वराहो यवनशास्त्रं याथार्थ्येन अतितरां मन्यत एवेत्य

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

र्थः १८ एतदेव भंग्यंतरेणाह यस्मात्कारणात्स्वमते स्वमतमध्ये निवेशितं निक्षिप्तं परमतं परदिनदूषितं तदानन्मतं आदृतं स्वी
कृतमेवेति न्यायविदः तत्तस्मात्कारणात् नूनमित्यहं तर्के इतीति कथं सवराहः कलितकेवलसत्यमतः कलितं लक्षितं
केवलं साकल्येन सत्याचार्यस्य मतं येन सतथा यवनपंक्तिषु यवनाचार्यवचनेषु अनिःस्पृहः निर्गतः स्पृहा निःस्पृहः
न निःस्पृह अनिःस्पृह इति वराहोपि सत्याचार्यमतं सम्यगालोच्यापि यवनमतं स्पृहयत्येवेत्यहं तर्के इत्यर्थः १९ एवं चे
त्तर्हि वराहो यवनमते अल्पमतत्वं कथमुक्तवानित्याशंक्याह अयंमिहिरो वराहमिहिरः इदं यवनोक्तग्रहसुहृत्त्व

दूषितवान्पुनः सबहुमन्यत एव यथातथं जयति शास्त्रमिदं यवनेष्वपि १८ परमतं स्वमते विनिवे
शितं यदि न दूषितमादृतमेव तत् कलितकेवलसत्यमतः सतद्यवनयुक्तिषु नूनमनिःस्पृहः १९॥

ग्रहमैत्रमादिशन्सन्बहुत्वं अवहू नामतमिति हृदि मनसि किं जगृहे धृतवान् यवनगृहमैत्रमुक्त्वा केषांचिदेवंमतमिति कथं
उक्तवानित्यर्थः तथाच तद्वाक्यं जीवो जीवबुधौ सितेंदुतनयो व्यर्का विभौमाः क्रमाद्वीद्वर्का विकुजेंदुवश्च सुहृदः केषांचिदे
वंमतमिति अतो यवनमैत्रमबहुसंमतमिति वराहस्याभिप्राय इति भावः अत्रोत्तरं उभयथेति तत्समते तस्य वराहस्य मते
महति पृथुतरे सति उभयथा उभयपक्षेपि समं तुल्यं स्यात् यतो यस्मात्कारणादयं केचन केपि भवेमस्साम वराहमतम
हं चेत्तर्हि वयमपि महांतो भवामेत्युभयत्र समं उभयोरपि मानुषत्वादिति भावः २० एतन्निरस्य पुनः संस्थापयति॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

सकृतीकुशलोवराहः बहुतरैर्भूयिष्ठैर्यत्कृतंतदेव अनुससर्त्ति अनुसरतिबहुमतानुसारमेववक्तीत्यर्थः सृगतौ अयंधातुपाठेवैदिक
धातुष्वेव ह्वादिषुपठितः भाषायांतु भ्वादिष्वेव अनुससर्त्तीति छंदस्येवघवते भाषायांतुसरतीत्येवयङ्लुकितुसर्सर्त्तीतस्मादयंक
विप्रमादएव अतोत्रेदंपठितव्यं अनुससारतदप्ययथातथमिति इतिचेत्तदपिअयथातथंसत्यंनभवेति अत्रहेतुः पृथगितियुतः
पृथगपिद्विगुणेत्रिगुणेप्राप्तेसकृत्त्रिगुणमितियदुक्तं साअवहूक्तिः अवहूनामुक्तिः साययथावर्गोत्तमस्वराशिद्रेष्काणनवांशके
सकृद्विगुणंवक्रोच्चयोस्त्रिगुणितंद्वित्रिगुणत्वसकृत्त्रिगुण मिति वर्गोत्तमादिष्वन्यतमगतेवक्रोच्चयोरन्यतरगतेचगृहेसति

किमवहुत्वमयं मिहिरोदिशत्यग्रहस्तु हृत्वमिदंजगृहेहृदितु भयथापिसमंसतितन्मतेमहतिकेपि
भवेमवयंयतः २० वहुतरैः कृतमेवकृतीससर्त्ति चेदनुससर्त्तितदप्ययथातथंपृथगपिद्विगुणेत्रिगु

णस्यायुषः पृथग्द्विगुणत्रिगुणस्यचप्राप्तौ एकवारमेवत्रिगुणंतदायुःकार्यमितिवराहेणयदुक्तंतन्नवहुसंमतमतोवराहोक्तमपि
नवहुसंमतमितिभावः तथाचोक्तंकल्याणवर्मणावहुनाडनसंप्राप्तौ योकरोत्येकवर्गिणां वराहमिहिराचार्यः सानदृष्टाप्रुरातनैरि
ति अतोवराहोपिवहुसंमतमेववक्तीतिनकिंतुकदाचित्स्वमनोरचितमपिवक्तीत्यतोयवनोक्तग्रहमेत्रविषयेकेषांचिन्मतमि
तिवराहेणोक्तेपितद्वाक्यस्याप्रामाण्याद्यवनोक्तमेवग्राह्यमित्येतदित्यर्थः एतन्नवांशचिंतनाव्याजेनापिसम्यक्संस्थापयिष्य
ति एतद्रूपयहतः स्वपक्षस्थापनार्थंपाण्डित्यमात्रंवास्तवंनैतदितिवयंब्रूमः यतउक्तंवराहेण बृहज्जातकेसत्योपदेशोवरमत्र





Digitized by Sarayu Trust Foundation Delhi and eGangotri.
CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

किंतु कुर्वंत्ययोग्यं वहु वर्गणाभिः आचार्यकत्वं तु वहुघ्नतो यामेकं तु यद्गुरितदेव कार्यमिति अत्रैवं मतभेदे सति सत्योपदेशो वरं तद्धि
किंतु अन्ये स्वतुंगवक्रवर्गोत्तमस्वगृहादिगते ग्रहे सति वहुवर्गणाभिर्यदायुः कुर्वंति तदयोग्यं अनवस्थादोषप्रसंगादिति भावः आचा
र्यस्य कर्म आचार्यकं तस्य भावः आचार्यकत्वं आचार्यस्य सत्याचार्यस्यायमभिप्राय इत्यर्थः वहुवर्गणायां प्राप्तायां सत्यां यदेक
मधिकं वर्गणं तदेव कार्यमिति तद्यथा उच्चगतस्य उच्चगणो रूपत्रयं वक्रगतस्य चेष्टागुणोपि रूपत्रयं तत घातमूलं स्फुटगुणोपि
रूपत्रयं वर्गोत्तमस्वगृहादिगते आश्रयगुणोपि रूपत्रया सन्तः तस्फुटगुणयो घातमूलकर्मगुणोपि रूपत्रयं अतः उच्चवक्र

रोसकृत्त्रिगुणमित्यवहूक्तिरियं यतः २१ अभिदुरावधिपो सुहृज्जनः शुभं शशिनवांशकयोरिति देवलः
तदपि चारुन चारु षितैर्मुखे व्यवहरंति न याविनयाशयाः २२ लवदृशो[illegible]हि लग्नदृशं विनाफल

वर्गोत्तमस्वगृहद्रेष्काणादिगतेपि सकृत्त्रिगुणमित्येव अतो वराहेण गर्गसत्यादिमतानुसारेण यदुक्तं तद्युक्तियुक्तं वहुमतं चेति अतो
ग्रंथकर्तावहुतरैः कृतमेवेत्यादि यदुक्तं तत्र विचारणीयमिति २१ सर्वराशिसख्यप्रसंगेनो त्काइदानीं नवांशसंख्यस्यापि ग्राह्य
त्वमतिपादितत्वात्तत्कथं नोक्तं तद्विषयमाह जन्मकाले शशिनवांशयोश्च द्रगतनवांशयोः अभिदुरौ न भिदुरौ ययोस्तौ अभिदुरौ
सुहृदौ भिदे भेर्विकुरत्व अधिपौ सुभं सृजतः कुरुत इति देवलो मुनिः प्राह तदपि चारु रमणीयं यतस्तत् कालमीमांसयैव प्रति पा
दितं तथा तेन प्रकारेण जनाः वितथाशया न व्यवहरंति वितथमसत्यमाशयो येषां ते तथा असत्याभिप्रायाः कैः आईषत्

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



हृषितैः कुपितैर्मुखैः अयुक्तं मनसि रवीकृत्य किंचित्कुपितमुखेन व्यवहरंतीत्यर्थः यद्वा अविनयाः पापाः यथार्थमनोभावाः मन सैवमेवास्ति परंतु नादृशैर्मुखैस्तथा न व्यवहरंति लोके अप्रसिद्धिभयादिति भावः २२ सर्वदेवलादिमते सत्यपि येन वांशसख्यव्यव हारं न कुर्वंति तेषामनिष्टमाह यदैवविदः करग्रहे लग्नदृशांशविनाशवद्दृशानवांशदृक्स्यैव फलममंसत लुङि मन्यंते स्म तेपि शशिन वांशसखित्वपराङ्मुखाः किंस्तु तथाहि उदयगतनवांशाः स्वेशदृष्टो युतो वा न भवति यदि मृत्युः स्यात्तदानीं वरस्येत्यादीनि नवांशदृक्स्यैव लग्नफलमन्यते लग्नफलं नवभागे इत्यंशस्य समुख्यत्वात् तएव मेलकार्थे चंद्रनवांशयोः सख्यकथनमन्यं तदित्तेषामनिष्टं अ

मंमंसतये पि करग्रहे २२ शशिनवांशसखित्वपराङ्मुखाः किमलमस्तु गतानुगतं जगत् २३ इति विवाह वृंदावने मेलकाध्यायस्तृतीयः ३ अथ नवांशचिंताऽध्यायः नवलवाधिपती उदयास्तयोरनिमिषार्चितवां

थेदमलमस्तु दूरं निष्टुतत्कथं जगद्धि यंगतानुगतं गतमनुगतं गतानुगतं गतानुगतिको लोको न लोकः पारमार्थिक इति कश्चिदि सज्ञानाद्व्यवहरत् तथैवान्यस्तद्वदन्योपीत्यंधपरंपरावदिति भावः २३ इति श्रीसकलागमाचार्य श्रीकेशवसांवत्सरात्मजगणेशवि रचितायां विवाहवृंदावन टीकायां विवाहदीपिकायां मेलकाऽध्यायस्तृतीयः ३ अथ सूक्ष्मलग्नादिफलं विवक्षुस्तावन्नवांशचिंतां निरूपयति तत्रादौ करग्रहोक्तनवांशोपपत्तिव्याजेन यत्नोक्तग्रहमैत्रं संस्थापयति तथाहि लग्नं किल भर्तुः स्थानं तत्रत्यो नवांशोपि सप्तमं जायास्थानं तत्रत्यनवांशश्च तयोः सख्ये वरवध्वोः सख्यं अतः सूक्ष्मयोरुदयांशास्तांशयोः स्वामिवशात्सख्ये सति वधूवर



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

योरपिमैत्रंस्यात् अतोयेषांनवांशानामेवंघटते तएवनवांशास्तुलाध रादयः पूर्वैः पठितास्तेचयवनोक्तग्रहमैत्रस्यैवस्वीकारा
त् घटंते अतोयवनोक्तमेवग्रहमैत्रंप्रमाणमितिसिद्धांतंमन सिमत्वापूर्वोत्तरपक्षौरचयतिनवलवेत्यादिनाश्लोकद्वयेन ।
अत्राध्यायेसर्वाणिद्युतविलंबितानि उदयास्तयोर्लग्नतन्सप्तमगतयोर्नवलवयोरधिपती अनिमिषार्चितचांद्रमसायनौ
यदितः अनिमिषा देवाः तैरर्चितोबृहस्पतिः चंद्रमसोनंतरापत्यं चांद्रमसायनोबुधः नैतच्चतुरस्रं अनंतरापत्येफकञ
विधानात् केचिदपत्यमात्रेपिअणादीनिकुर्वंतितदपिननडादिष्वपाठात् पृथग्विधानादर्शनाच्च एवंसतितस्येदमित्याद्य ।

द्रमसायनौ वरपतिंवरयोःसमवैरिणौयदितदिष्टफलेष्वपिफल्गुतः १ तदुदयद्विपदांशनियाम
कोयवनसौहृदमाद्रियतांजनः इतरथाकथमस्तुकरग्रहस्तनुफलंहिलवानवलेवतः २ अथरिपू

पिनिरस्तं यत्तुप्रायश्चित्तस्मृतौचांद्रायणमितिप्रयोगः तदेवंव्युत्पादितं चंद्रस्य अयनमिवायनं चरणंयस्मिन्कर्मेणितच्चांद्रायणं
संज्ञायांदीर्घः एवंसौमायनादि अतोग्रंथकृता अनंतरापत्येचांद्रमसायनइतिप्रयुक्तस्यगतिमात्रंचिंत्यते चंद्रमसइदंचांद्रमसं
चांद्रमसं अयनं उत्पत्तिस्थानंयस्यासौचांद्रमसायनोबुधः तौगुरुबुधौयदिसमवैरिणौस्तः तत्तदावरपतिंवरयोर्वरवध्वोःपतिंवृ
णुतेपतिंवरा संज्ञायाभृतृवृजिधारिसहितपिदमइतिखः खित्वान्मुम् इष्टफलेषुशुभफलेषुफल्गुनानिःफलतास्यात् एत
दुक्तंभवतिलग्ननवांशः किलवरस्यस्थानंतत्सप्तमांशोवध्वाः अनस्तदधिपयोर्मैत्रेसतितयोःशुभंतत्रयदालग्नेधनुरंशः तदास

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

समे मिथुनांशः अनयोरधिपती गुरुबुधौ तौ सत्याचार्यमते शत्रू मंदसितौ वित्यादिना मिथः समवैरिणौ भवतः अतोऽत्र वरवध्वोः । शुभं न स्यात् तस्माद्धनुरंशो न ग्राह्य इत्यनिष्टप्राप्तेः १ अतो यवनमैत्रं ग्राह्यमित्याह तत्तस्मात्कारणाज्जनः यवनसौहृदं यवनोदितमैत्रमाद्रियतां स्वीकुरुतां दृङ् आदरे तुदादिः कर्तरि लोट् सौहृदमित्यस्य गतिः प्राग्वत् कथंभूतो जनः उदयद्विपदांशनियामकः उदये लग्ने द्विपदांशो नरराश्यंशस्तस्य कर्तृतोतितथाकर्ता विधुरा लग्ने द्विपदांशस्वीकारं नियममिच्छन् मैत्रं ग्राह्यमित्यर्थः अन्यथा ल[illegible]षमाह इतरथेति इतरथा द्विपदांशानंगीकारे करग्रहः कथमस्तु अपि तु मास्तु न त्कथं हि यः ।

यदि नोभयसप्तमौ तदपशः कलशस्य किमागतं द्विपदत्वं दधतोऽथ शुभं स्वेताय दिदृषानि मिथो कि
मुपेक्षितौ ३ अमतुजाविनिचेत्किमु शोनको नवलवक्षपमाहृतवान्मुनिः शुभग्रहे द्विपदांशस्तत्रवः

स्मात्कारणात्तनुफलं लग्नफलं लवान् अवलंबते आश्रयते लवाधीनं लग्नफलमिति अयं भावः लग्नफलं नवभागेषु मुख्यत्वान्नवांशो मुख्यः स च द्विपद एव भाव्यः तथा चोक्तं प्राग्लग्ने द्विपदगृहः कुर्यादन्यांशको दयोनाशमिति अतो द्विपदांशादन्यनवांशे वरवध्वोर्नाशविधानात् करग्रहः कथं स्यात् अतो द्विपदांशनियमे सति उदयास्तांशाधिपयोर्मैत्र्याभावं सा च धनुर्द्वंरांशे यवनोक्त्या लभ्यते अतो यवनोक्तमेव ग्रहमैत्रं आद्रियतामिति २ अत्राप्यन्यस्याशंकामनूद्य दूषयति अथ प्रकारांतरे अथ उभयसप्तमौ नदिपूर्लः समसप्तकयोः सदा राशिमैत्री अस्त्येव चतुर्दशमवत् अतो धनुर्मिथुनयोर्मैत्रं सदास्तीति यदीदं तदा कलशस्य द्विपदत्वं।

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

नरत्नां दधतो विभ्रतोप्ययशः अशुभत्वं किमागतं कुंभे हि उत्तरार्धे मनुष्यउदयास्तांशयोः सदासमसप्तकत्वान्मैत्रं अतः कुंभांशः
कथं न गृहीत इति अत्रोत्तरं अशुभसंज्ञेपि अशुभसंज्ञा पापग्रह भवनत्वं कुंभो हि पापग्रहभवनमतो नोक्त इति अत्र मस्तूत्तरं एवं
चेत्तर्हि वृषानिमिषौ वृषमीनौ किं सुपेस्तितौ कथं परित्यक्तौ वृषमीनौ सौम्यभवनत्वेपि कथं त्यक्ताविति ३ अत्रोत्तरमस्तु नरा
णितौ वृषमीनौ अमनुजौ मानुषौ न भवतः तदुदयहि पदांशनियामक इत्युक्तत्वात् इति चेत्तर्हि शौनको मुनिर्झषं मीनं नन वलवं।
कथमादृतवान् स्वीकृतवान् प्रहसित वदना च मीनांश इति मीनो हि जलचरः कथं शौनकेन गृहीत इति अत्रोत्तरं स मीनः।

सत्येव भवतु तत्र किमसक्तु तुलाभृतः ४ द्विचरणः शुभभं भवनवांशकस्तदयमेकतरः परिगृह्यते इदमसंग
तमं गतवैरितं जगति नैकवशान्किलसौहृदं ५ खचरयोः सखितायदिकारणं ध्वनिततानितरांयत्र

शुभगृहद्विपदात्तलवः शुभगृहं द्विपदश्च अत्तलवो यस्य स तथा मीनस्यात्तांशः कन्या असौ शुभगृहं द्विपदश्च अतो मीनांशः शौन
केन आहृत इति अत्र मस्तूत्तरं इति चेत्तर्हि तुलाभृतः किमस्तु तुलाधारस्य हि अत्तलवो मेषः स अशुभगृहं द्विपदश्च न भवति अतः क
स्मात्तुलाधरः स्वीकृत इति ५ अत्रोत्तरमस्तूत्तरे यद्येवमुक्तं त्वया तत्तर्हि अयमेकतरो नवांशो द्विचरणः शुभभं च परिगृह्यते उदयनवां
शास्तनवांशयोरेकतरो नवांशो मनुजः सौम्यगृहं च गृह्यते न तु द्वावपीत्यस्माकमाशयः द्वयोरेकस्य निर्धारणे तरप् तुलाभृतो हि अ
स्ते शो मेषः तयोस्तुलामेषयोरेकतरस्तुलाधरः असौ द्विचरणः शुभभं चाति अतस्तुलांशो गृहीत इत्यर्थः अत्रोत्तरं अंगेत्यव्ययं संबो

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

वि॰दं॰ धनेहे अंगनवई रितेउक्तमिदमसंगतमघटमानं कस्मात् किलयस्मात्कारणाज्जगतिलोके एकत्र शान्सोहृदं नास्ति सौहृदं हि उभ अ॰
टी॰ यगतोधर्मः स चैकस्मिन्नेव न घटते अत एकतरो गृह्यते इतितद्युदीरितेत्वयानतदंगमिति ई इति मत्रभावेक्तः नवेति शेषविवसा ७
२५ यांपत्नी सौहृदमित्यस्य गतिः प्रागवत् ५ एवं सर्वविकल्पान्परिहृत्य परिशेषात्कलितं सिद्धान्तमाह खचरयोरुदयांशास्तांशस्वा
मिनोः सुहृत्तामित्रत्वकारणं वक्तव्यं विकल्पान्तराणां निरासात्सा यदि कारणं स्यात्तर्हि सासरविनायवनाध्वनि यवनमार्गेनि
तरां अतिशायेन ध्वनति शब्दायते यवनशास्त्रे प्रसिद्धेत्यर्थः सत्याचार्यमते तु तयोर्मैत्र्यभावात् अतो यवनमैत्र्यमेव प्रमाणमिति

नाध्वनि कलशसिंह नवांशप शत्रुतापरिणमत्युभयोरपि शास्त्रयोः ई अथ तयोः समसमस्तसुहृत्स्वर्थः
कथमसूक्ष्मगतिः सचनैकधा इह हि लग्नगतान्यनुमेनिरे तदखिलैः खलखेटगृहाण्यपि ७ ॥
इति तुलाजितुमप्रमदाधनुः प्रथमखंडमखंडफलं जगुः सततमस्तपतिर्द्विषदीश्वरं नवलवं बल

भावः ननु कुंभांशपरित्यागः सत्याचार्यमते वैरसद्भावादिति चेत्तत्राह कलशेति कलशसिंहो च तौ नवांशौ च तदयोः तत्रवांशेशौ तौ पा
न्तस्तौ नन्यौनरधिपतीतयोः शत्रुता वैरत्वं उभयोर्द्वयोरपि शास्त्रयोः परिणमति परिपाकं प्राप्नोति शनिसूर्ययोर्वैरं यवनशास्त्रे राम॰
सत्यशास्त्रेप्यस्ति अतो यवनमते शत्रुत्वासद्भावात्कुंभांशत्यागः ननु सत्यशास्त्रे वैरसद्भावादिति भावः ई एवं मेषप्रभृतीनामादि २५
कं विचार्यतेन तर्हि राशावपि कथं नावलोकयत इत्याशंकां परिहरति अथानंतरं हि यस्मात्कारणात्तयोर्यवनसत्यशास्त्रयोः सम

Digitized by Sarayu Trust Foundation Delhi and eGangotri.
CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ससमसुहृत्त्वग्रः कथमसूक्ष्मगतिः अपितुसूक्ष्मगतिरेव समाश्चतेसमचसमसमसुहृदांपंथाःसुहृत्त्वग्रः ऋकुपूरकूपथामित्यमन्यय:
समसस्थानांसुहृत्त्वग्रः समससमसुहृत्त्वग्रः वरव धूस्येनराश्योः सदासमससकत्वादुभयमतेपिसमससकराश्योर्मित्रत्वमार्गःसू
क्ष्मएवेत्यर्थःसचसुहृत्त्वग्रः सकधारएक मकारोनास्ति तत्कालमैत्रादेरपिसद्भावात् उक्तंहिन्यूनामथो त्यादिनातत्तस्मात्कार
णादिहास्मिन्विवाहे अखिलैःयवनादिभिःसत्यादिभिश्चखलखेटगृहाणिपापग्रहभवनानिमेषसिंहादीन्यपिलग्नगतानि ।
अनुमेनिरे अनुज्ञातानिअपिःसंभावनायांपापभवनान्यपिशुभानिकिंपुनःशुभभवनानीत्यर्थः ७ अथप्रकृतस्यसिद्धांतमाह इत्यु
क्तहेतुभिःसिद्धं तुलाजितुमप्रमदाधनुः प्रथमखंडेसततमनवरतं अखंडं फलं पूर्णशुभफलंदंजगुर्यवनादयः तुलाप्रसिद्धा
जितुमोमिथुनः प्रमदाकन्याधनुः प्रथमखंडंधनुषःपूर्वार्द्धं हंद्वं कत्वं नखंडेफलंयस्यतत्तथातंथाहि धनुःपूर्वार्धकुंभोत्तरा
र्द्धं मिथुनतुलाधरकन्याद्विपदाःकिलोक्ताःतत्रधनुषोस्तांशोमिथुनः तत्स्वामिनोर्गुरुबुधयोर्यवनमतेमैत्रंअतोधनुरंशः
शुभः एवंमिथुनांशोपितुलायाअस्तांशोमेषःतत्स्वामिनोःकुजशुक्रयोःयवनमतेमैत्रमतस्तुलांशःकुंभःकन्यायाअस्तांशो
मीनः तत्स्वामिनोर्गुरुबुधयोर्यवनमतेमैत्रमतः कन्यांशःशुभः कुंभस्यास्तांशः सिंहः ततत्स्वामिनोर्मैत्राभावात्कुंभांशोनशु
भः अतएवनवांशाःशुभाअखिलैरुक्ताः तथाचाहुः प्राग्लग्नेद्विपदगृहात्कुर्यादन्यांशकोदयो नांशाद्विपदेष्वपिकन्यांतौ
लिमिथुनधन्वंशकाःशस्ताइति अयंग्रंथकृत्तोभिप्रायःसमपंचमयावर्णितःपरमार्थिकत्वेनदर्वाचीनानांनयनावर्णमात्रं।
तद्यथा यत्त्वयासिद्धांतितंतुलादिषूक्तनवांशेषुउदयास्तांशाधिपयोःखचरयोःसखिताकारणमिति तर्हिमेषांशःतद

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰ टी॰ २६ धिपयोः सत्यपि मैत्रे कथं त्यज्यते अशुभत्वादिति चेतन्न वृषांशस्य सत्यपि मैत्रे त्यागात् अमनुजत्वादिति चेत्तर्हि शौनकेन अ॰ ४
मीनांशः कथमादृतः शुभग्रहद्विपदात्स्सवः स चेन्न द्विपदं न तर्हि तुलांशः कथमाद्रीयत इति त्वयैवोच्यते उदयास्तांशयोरेकतर
स्तादृशो गृह्यत इति चेत्तदपि न जगति नैकवशात्किल सोऽहद मितित्वयैवोपन्यस्तत्वात् अथ चेन्न वेदमभिप्रेतं उदयद्विपदा
शानियामक इति तदपि न जगति नैकवशात्किल सोऽहदमिति त्वयैव स्मारितत्वात् अस्तांशोपि द्विपदो भाव्यः अथ परिशेषान्न्याय
नैद्विपदगृहात्कुर्यादन्यांशको दयोनाशमित्यागमवलादिदमित्येववक्तव्यं न ह्यस्माकं फलितं मनोमिलषितं आगम एव क
थं तुलांशादिषु कारणं तत्स्वीकर्तव्यः किमर्थं कारणांतरं ग्रहमैत्रं कल्पनीयं कल्पनालाघवात् शौनकेन मीनांशस्य अमनुज
त्वेपि स्वीकारांच अतोन वांशोत्पत्तायवनमैत्रशास्त्रस्य संस्थापनेन संयुज्यते किमनेन नवलवाधिपती इत्यादिना ग्रंथसंदर्भेण
अत एव वराहः ज्योतिरागमसिद्ध विप्रतिपत्तौ न योग्यमस्माकं स्वयमेव विकल्पयितुं किं तु बहूनां मतं वक्ष्ये इति अतो वराहेणाय
वनमनेकेषां चिदेवं मतमित्युक्तं सत्यानं ग्रहमैत्रं बहुमतमतः सर्वजनेषु प्रसिद्धतरं यवन मैत्रस्यैकदेशीयमतो महद्भिरुपे
क्षितं किमर्थमत्र ग्रंथकृतोभिनिवेशः किमपराद्धं च सत्यादिभिः उच्यते ग्रंथकृद्भिः स्वगौरवार्थं किंचिदपूर्वं वक्तव्यं नृयाँवमहता राम॰
मप्युक्तिः किंचिद् दूषणीयेत्यलं बहूक्त्या अथैषां मध्ये शानां विशेषमाह अस्तपतीति अस्तोस्तांशः तस्य पतिस्तस्य द्विपनृशत्रुः सर्वई २६
श्वरो यस्य नवांशस्य सतथा उदयास्तांशाधिपयोस्तात्कालिकशत्रुत्वे सति समनवांशस्त्याज्य इत्यर्थः तुलादिषु हि उदयास्तांशा
धिपयोः स्वाभाविकशत्रुत्वाभावात् विशेषांतरमाह वलवं ध्येति वलेन वंध्यः पतिर्यस्य नवांशस्य सतथा यस्यांशस्य पतिः ॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

स्थानादिवलैर्यद्विहीनः तदानमपित्यजेदित्यर्थः ८ अथोदयास्तशुद्धिमाह लवपतिः लवलग्नयोस्त्रिवसुव्ययवित्तगः पतिमृतिं कुरु
ते अंशाधिपतिरंशाल्लग्नाद्वा तृतीयाष्टमद्वादशद्वितीयस्थितो भर्तृमृतिं कुरुत इत्यर्थः इयमुदयशुद्धिः अथास्तशुद्धिः नवलवेति
नवलवाद्स्तं सप्तमं तस्य पतिः तदस्तभयोस्तयोर्लवलग्नयोरस्तभे सप्तमभवने तयोः तथा तद्वत् त्रिवसुव्ययवित्तगः मृगदृशो वै
ध्वा असूत्वमिति हंति नवलवान्सप्तमाधीशो नवांशसप्तमाल्लग्नसप्तमाद्वा त्रिवसुव्ययवित्तगस्तदा वधूं हंतीत्यर्थः ननु पूर्वैर्यवना
दिभिर्नवांशाधीशस्य नवांशदृष्टौ लग्नदृष्टौ च सत्यामुदयशुद्धिरुक्ता कथमत्रोक्तं त्रिवसुव्ययवित्तगइति उच्यते षष्ठं द्वितीय

वं ध्वपतिं त्यजेत् ८ लवपतिः कुरुते लवलग्नयोः पतिमृतिं त्रिवसुव्ययवित्तगः नवलवास्तपतिः
मतिहंत्यसूत्मृगदृशश्च तदस्तभयोस्तथा ८ उभयदृक्फलदावलदार्थेतो लवदृग्द्वहते क्रिय

भवनं द्वादशमेकादशं न पश्यति स्वस्थानाद्वीक्ष्यंते ग्रहास्तथान्यानि भवनानीत्यत्र ग्रहस्थानाद्यदेकादशं तस्माद्ग्रहस्तृतीय एव
भवति एवं यत्स्वस्थं तस्माद्ग्रहो ष्टमएव व यद्द्वितीयं तस्माद्द्वादशः यद्द्वादशं तस्मात् द्वितीय इति अतो यदुक्तं त्रिवसुव्ययवित्तग इति तद्ग्रह
दर्शनमेवेति न विरोधः अथान्यैः केवलमत्राहृक्षैव वोदयशुद्धिरुक्ता पुनः स्वनाथेन विलोकितो वा नवांशको लग्नगतो नराणां
निहंत्यनिष्टानि तथा पमृत्युकलत्रसंस्थश्चनितं विनीनामिति तदस्तभे लग्नदृष्ट्या वा पश्यद्यदांशाधिपतिर्विलेग्नलग्नेयवास्त
दुदयांशशुद्धिः अस्तांशनाथः स्मरभं विलग्नान्यश्येत्तदास्तांशविशुद्धिरुक्तेति ८ अत्र तु लवलग्नयोरिति योगपद्यमुक्तं तत्र

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



श्चमित्याह उभयस्य दृक् उभयदृक् नवांशस्य लग्नस्यापि या दृष्टिरित्यर्थः सा फलदा स्यात् कस्मात् बलदाढ्यतः बलस्य दृढत्वात्
लग्नं हि शरीरं अंशस्तु तदवयवरूपः उभयदर्शने सति सम्यक् फलमिति अतो लवदृक् अंशदृष्टिः कियद्दूनतां सुहृत्ते धारयति किं
परिमाणमस्येति कियत् कियच्च तद्दूनं च तस्य भावः कियद्दूनता केवलमंशदृष्टिः किंचिन्न्यूनफलेत्यर्थः ततस्मादतः कारणादिहा
स्मिन्विवाहे केवललग्नदृशः फलं शकलितमर्धितं यवनेश्वरैः कलितं लक्षितं शकलं संजातमस्येति सकलितं अंशदृष्टिं विनाकेव

दूनतां नदिह केवललग्नदृशः फलं शकलितं कलितं यवनेश्वरैः १० स्पृशति किन्न कदाचिददृश्यतामवयवोवयविन्यवलोकिते अमतकेवललग्नदृशान तन्मतमतर्कसहं समुपास्महे ११ ननु नवांशकमंशपति
र्निजं कलयतीह विलग्नविलोकने यमवलोकयते सततं नो: पृथग्यदि तदिष्टफलाय जलांजलिः १२ अपृथग

लायाल्लग्नदृष्टेः फलमर्धितं यवनैः प्रोक्तमित्यर्थः १० असुमुक्तमेवार्थं युक्त्या दृढयति यस्मात्कारणात् अवयविनि विलोकिते सति
अवयवः कदाचिददृश्यतां किं न स्पृशति अपितु अवयविन्यवलोकितेपि कदाचिदवयवोप्यदृश्यतां स्पृशत्येवेति द्वौ नञौ प्रकृता | राम
र्थं ब्रूतः दृष्टेप्यवयविनि कदाचित्क्वचन तदवयवो न दृश्यत इत्यर्थः तत्तस्मात् कारणादमतकेवललग्नदृशा न मता केवला लग्न | २७
दृग्येषां तेषां मतं तन्मतं तर्कसहं अपितु तर्कसहमेव तर्कसहत्वेन तर्कसहं वयं समुपास्महे अनुसरामः येषां केवललग्नदृष्टिर्न सं
मता अपितु उभयदृक् संमता तेषां मतं तर्कसहं तद्वयं मन्यामह इत्यर्थः यदुक्तमुभयदृक् फलदेति ११ तत्र केवललग्नदृष्टिम

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

स्यमानः पर आशिषपति ननु इत्यहोद्दह विवाहे अंशपतिर्लग्नविलोकने स्तनि निजं नवांशं कलयन्निपश्यति तत्स्यलग्नांतत्वात् अन्य
थास्वे अनिष्टमाह यमवलोकयत इति नवांशपतिं नवांशमवलोकयते सयदि तनोः सकाशात् पृथगस्ति तदा तद्दिष्टफलायत
स्यलग्नस्य दृष्टफलं नवापि संमतं तस्मै जलांजलिः स्यात् जलांजलिदानं मृतस्यैव अतो लग्नफलं गतमेवेत्यर्थः ननु फलं हिल
वानवलंवने इति नवापि संमतं नवांशाधीनं लग्नफलमिति तस्य मज्जनमेव स्यादित्यनिष्टप्रसंजनं १२ अत्राप्यनिष्टमुभय
दृष्टिं मन्यमानः स्वयमाह ननु अहो सनवांशश्चेत् अपृथगस्ति लग्नांतर्गतस्तवास्ति तदा तनुं लग्नं पश्यता अवलोकयता अ

स्ति स चेत्तनु पश्यता तनुमसावधिपेन निरूपितः हृदयहारदृशेव मृगीदृशः प्रणयिना तरलस्तरलद्युतिः १३॥
ननु पतिस्तनुमस्तमथास्तपोयदि न पश्यति तन्न श्यति तत्कृतं इति परः परमत्रमतेपतेस्त्रव तदैव च तदैव इह

धिपेन लग्नस्वामिना असौ नवांशो निरूपितो दृष्ट एव स्यात् रूपमवलोकने चुरादिः केनक इव प्रणायः प्रीणनं तदस्यास्तीति प्रण
यी प्रियः तरलो हारमध्यमणिः कथंभूतेन प्रणयिना मृगीदृशः अंगनाया हृदयहारदृशा हृदये हारस्तं पश्यतीति हृदयहारदृक्
तेन तथा कथंभूतो मध्यमणिः तरलद्युतिः तरला चंचला द्युतिर्यस्य सो न यथा प्रियेणांगनाया हारे दृष्टे सति तदंतर्गतो मध्यमणि
दृष्ट एवेति तथा लग्नं पश्यता तदधिपेन तदंतर्गतो नवांशोपि दृष्ट एवेत्यर्थः अतो न वाशयति नानवांशो दृष्ट इति यत्त्वयो
च्यते तदपार्थमित्यनिष्टप्रसंजनं अतश्च प्रागुक्तकालमीमांसा नाश्चनवांशपतेर्लग्नदृष्टिस्तदंतर्गतनवांशदृष्टिश्च विलो

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



केचेति सिद्धं २३ ननु लग्नपतिना लग्नेन्द्रस्थत्वमस्तपतिनास्तलग्नमित्येतदपि केषांचिन्मतमस्ति तदपि दूषयति यदि तनुपतिस्तनुं न पश्यति अथ 
अस्तपो लग्नात्सप्तमाधीशोऽस्तं लग्नात्सप्तमं न पश्यति तदा तन्वा तनुलग्नकृतं अस्तलग्नकृतं च शुभं न पश्यतीति परः कश्चिदाह वक्ता अहो अस्मिन्म
ते लवनतोऽलवस्त्वरूति व नरुस्तस्मिन् रौद्रः उग्रः श्राणो द्भूतः अशनिः खड्गः परपतनस्य रिमित्यव्ययमुन्काऽर्थे अस्मिन्मतेन वांश
वृक्षोपरि अन्वर्थ रौद्राशनिपातो भवेल्लवांशफलोच्छेद इत्यर्थः एवं सयुक्तिकामुदयास्तशुद्धिमुक्त्वाऽधुना जन्मराशिलग्नाभ्या
मंशास्तशुद्धिमाह लग्नं च भं च लग्नभे जनने लग्नभे जन्मलग्नजन्मराशी तयोर्मृतिस्थौ सितुः अष्टमस्थानाधिपतेः मृतिगतस्य ता
भ्यामष्टमस्थितग्रहस्य चराशीनां नवांशकाः यदि विवाहकाले तनुगता लग्नस्थितास्युः तदा वधूः तिलकाः अभर्तृकाः सतीति

वाशनिः २४ जननलग्नभयोर्मृतिशास्तितुर्मृतिगतस्य चराशिनवांशकाः तनुगता यदि तत्र तु नेव धूस्तिलका
तिलकायजलांजलीन् २५ अलिवृषं जननर्क्षविलग्नयोर्भवनमष्टममभ्युदितं त्यजेत् सितपुलस्तिम

लकाय भर्त्रे जलांजलीन् ननु ते विस्तारयति ददातीत्यर्थः तिलकः शृंगारः तिलकः नास्ति तिलको यस्याः सा अतिलका विधवे
त्यर्थः तिलक इव तिलकः तिलकः भर्ता तिया वत् मृतभर्त्रे स्वयमेवांजलिदानेन वध्वा अनपत्यतापि सूचिता एतदुक्तं भवति 
कस्यचिज्जन्मलग्नं वृषः जन्मराशिः कर्कः तयोरष्टमभवने धनुर्धरकुंभौ तयोरधिपती गुरुशनी एतौ नित्यौ कदाचित्तत्र धनुषि कुं 
भे वा कश्चन ग्रहः स्थितः स चेच्छुक्रः तेषां गुरुशनिशुक्राणां राश्यो धनुर्मीनमकरकुंभतुलावृषाः एष्वन्यतमस्य नवांशो यदि
तत्र विवाहे लग्नगतो भवति तदा परिणीता स्त्री अनपत्या विधवा भवेदिति एवं वध्वा अपि जन्मलग्नाज्जन्मराशेश्च २५॥

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

अथाष्टमलग्नदोषं तदपवादं चाह जननर्क्षविलग्नयोर्जन्मराशिजन्मलग्नयोरष्टमं भवनमप्युदितं उदयंगतं विवाहेत्यजेत्।
जन्मराशेर्जन्मलग्नाद्वा अष्टमं लग्नं त्यजेदिति तात्पर्यार्थः कथंभूतं व्यलिवृषं वृश्चिकवृषव्यतिरिक्तं वृश्चिकवृषावष्टमावपि न
त्याज्यावित्यर्थः अत्र हेतुमाह सितपुलस्तीति तयोरलिवृषयोरीशत्ता स्वामिता तनुसमा यो हि लग्नाधिपतिः सएवाष्टमनयो
रिति इति हेतोः सितपुलस्त्योर्मिते दूषणं न समेति न संगच्छते तनुरिति राशेरप्युपलक्षणं एतदुक्तं भवति वृश्चिकोष्टमो मे
षस्यैव भवति यो वृश्चिकस्याधिपः स एव मेषस्य एवं वृषोष्टमस्तुलाया एवं तयोरधिपतिरेक एव अत एकाधिपतित्वा
त् वृषवृश्चिकयोरष्टमत्वेन दोष इति केचित्सुहृत्त्वेपि न दोषमाहुः मेषकुलीरवृषालिमृगांगनाजननराशिविलग्नगृहाष्ट

तेन न दोषानातनुसमेतिसमेति न दूषणं १६ चरलवं चरवेश्मगमुत्सृजेन्मृगतुलाधरगे मृगलक्ष्मणि युव
तिरत्र भवेत्कृतकौतुका मदनवत्यनवेजनोन्मुखी १७॥ ९ माः शुभफला भृगुणा कथितास्तयोरधिपती सुहृदौ हि प

रस्परमिति १६ अथ चरलग्नसंनिपातदोषमाह चरलवं चरनवांशं चरवेश्मगं चरराशिलग्नस्थितमुत्सृजेत् परित्यजेत् कस्मि
न्सति मृगलक्ष्मणि मृगतुलाधरगे सति मृगः शशः लक्ष्म लाञ्छनं यस्यासौ तथा तस्मिन् चंद्रे मकरस्थे तुलास्थे वेति चरा मेष
कर्कतुलामकराः तत्र कर्कमेषस्थिते चंद्रे विवाहनक्षत्राभावात् मृगतुलाधरग इत्युक्तं अत्र फलमाह युवतिरिति अ
त्र योगे कृतकौतुका युवतिः मदनवती सती अनवन्यजनोन्मुखी भवेत् कौतुकं विवाहकंकणं कृतं कौतुकं यस्याः सा तथा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



विवाहितेत्यर्थः नवः अनवः पुरातनस्तस्य जनं तत्रीन्मुखीउत्सुका मदनार्त्तासती पूर्वभर्त्तृपरित्यागेउत्कंठिता परपुरुषगामिनीत्यर्थः केचित्तु वर्गोत्तमेसति नैषदोष इत्याहुः वर्गोत्तमे वरगृहे न च रोन वा शङ्केति अन्ये त्वाहुरन्योपि कर्के लग्ने यवामेषघटांशोयदि दीयते तुलायां मकरे चंद्रे वैधव्यं लभते तेनदेति १७ अथ चतुर्थद्वादशलग्नस्य दोषं तदपवादं चाह । ननु अजन्म च तनुजन्म नीतयोस्तनुजन्मनोः जन्मलग्न जन्मराश्योः सुखगृहं चतुर्थभवनं तनुगतमित्यनुवृत्तिः सुखहत्सुखनाशनं स्यात् कैः सुखकर्तृभिर्ग्रहैः अवलता शवलैः कालाच्चेतिसमस्यार्थे तृतीया अबलानां भावः अबलता तया शबला

सुखगृहं सुखहृत्तनुजन्मनोरवलताशबलैः सुखकर्तृभिः अपि तयोर्व्ययभं व्ययभंगकृच्चेद्विगतवाधनकाधनकारिणः १८ अशुभकृत्सबलगः खलु योंशको जनुरनेहसि नेहसितांशुगे १९ मलिनाखैर्बलरहितैरित्यर्थः अर्थात्सुखकर्त्तारोग्रहा यदि बलिनः स्युस्तदा जन्मलग्नराशिभ्यां चतुर्थलग्नं न सुखहृत्स्यादिति अपीति तयोर्जन्मलग्नजन्मराश्योः व्ययभं द्वादशभवनमपितनुगतं तदा व्ययभंगकृत्स्यात् व्ययंभनक्तीतिव्ययभंगकृत् व्ययनाशनं तदाकदा यदा धनकारिणोग्रहाः विगतवाधनकाः स्युः विगतवाधनकं येषां ते तथा वाधारहिताः निर्दुष्टा इत्यर्थः यदा तारोग्रहाः दोषरहिताः स्युस्तदा जन्मलग्नराश्योर्द्वादशं लग्नं व्ययनाशकं स्यादित्यर्थः अर्थादेतेनिर्बलास्तदा एतद्व्ययकरं स्यादिति तथा च गर्गः चतुर्थ द्वादशे कार्ये लग्ने बहुगुणान्विते इति अपि चाकार्ये योगबलात् द्वादशाच्चतुर्थे इति १८ अथ जन्मगृहवशेन नवांशस्य दोषांतरं तदपवा



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

जनुषः अनेहा जनुरनेहा तस्मिन् जन्मकाले अंशकः अशुभकृत्खलगो भवति अशुभं करोतीत्यशुभकृत् स चासौ खलश्च अ
शुभकृत्खलः तं गच्छतीति अशुभकृत्खलगः जन्मकाले दुष्टकारी पापग्रहो यस्मिन्नवांशे स्थितस्तनवांश इत्यर्थः इह तस्मिन्नवांशे
सितांशुगे सितांशुं चंद्रं गच्छतीति सितांशुगः तस्मिन् सितांशुगे तनुगते लग्नगतेपि अपि वा स्थे युवयोर्वरवध्वोः शिवं शुभं न
स्यात् वरवध्वोर्जन्मकाले दुष्टकारी पापग्रहो यस्मिन्नवांशे स्थितस्तनवांशो यदि विवाहकाले चंद्रगतो वा भवेत्तदा अशुभकृत्स्या
दित्यर्थः इत्यादिकस्यांशजनितदुष्टस्यापवादमाह बलवत्त्विति बलवतः बलयुक्तात्स्ववतोंशात् क्वचिद्भयनस्यात् येज्ञानको

तनुगतेपि शिवं युवयोरयोर्बलवतोलषतोनभयं क्वचित् १९ अनुजनुर्मृतिमो मृतिपश्च यः सतनुगस्त
नुतेन शिवं क्वचित् इतिविविक्तिरियं फलदा सदा स इह सिध्यति चेत्समयः स्फुटः २० ॥ ॥ ॥

केन अधिपयुतो दृष्टो वेत्यादिप्रकारेण बलवानंशराशिस्तदा यस्य कस्याप्यंशजनितस्य दुष्टस्य भयं न स्यादित्यर्थः १९ अथा
जन्मकालिकग्रहवशेन दोषांतरमाह जनुरनु कस्य अनुजनुरव्ययीभावः अथवा अनुगतो जनुः अनुजनुः प्रत्यादयः क्तांताद्य
र्थे द्वितीययेति तत्पुरुषः पुंवत् जनुर्जननजन्मानीत्यमरः जन्मकालानुक्रमेणायो ग्रहो मृतिगः जन्मलग्नादष्टमः यश्च जन्मल
ग्नान्मृतिपः अष्टमस्थानाधीशः स ग्रहो यदि विवाहकाले तनुगतो लग्नगतस्तदा शिवं शुभं क्वचिन्न तनुते न कदाचिच्छुभं क
रोतीत्यर्थः इतीयं जन्मकालवशेन या उक्ता विविक्तिः विवेकः विवेचनं विविक्तिः सा सदा तदा फलदा स्यात् तदा कदा चेत्सज

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

 

न्मकालो विवाहकालश्च इह काले स्फुटः सिध्यति यदा घटीपलात्मिकः स्फुटो जन्मकालो विवाहकालश्च साधितः स्यात्तदैवेदं
सूक्ष्मफलविवेचनं स्यान्नान्यथेत्यर्थः २० इति श्रीसकलागमाचार्यवर्य श्रीकेशवसांवत्सरात्मजगणेशविरचितायां विवाहवृं
दावनटीकायां विवाहदीपिकायां नवांशचिंताध्यायश्चतुर्थः ४ सबलग्नेन नवांशशुद्धिमभिधायाधुना ग्रहबलशुद्धिमाह त
त्रादौ लग्नाद्रवेः शुभाशुभस्थानान्याह अत्रापि द्रुतविलंबितवृत्तानि अरिः षष्ठं पराक्रमस्तृतीयं लाभ एकादशं विनाशोऽष्ट
मं एषु गच्छति तथा लग्नादेषु वर्तमानो रविः मृगदृशां स्त्रीणां शयसंग्रहे पाणिग्रहे अविश्रमसौख्यसुतार्थदः स्यात् नास्ति

इति विवाहवृंदावने नवांशचिंताध्यायश्चतुर्थः ४ अथ लग्नबलाध्यायः अरिपराक्रमलाभविनाश
गोऽरविरविश्रम सौख्यसुतार्थदः मदनमूर्तिशयः शयसंग्रहे मृगदृशामशनिः शनिराहुवत् ॥१॥

विश्रमो विश्रांतिर्यस्य तद् विश्रमं तच्च तत्सौख्यं च तद्ददातीति तथा पंचशाखः शयः पाणिरित्यमरः शेषेष्वष्टसु स्थानेषु दु
ष्ट इत्यर्थसिद्धं तत्राप्यतिदुष्टस्थानद्वयमाह मदनेति मदनमूर्तिशयः अशनिः स्यात् अतिदुष्टः स्यादित्यर्थः मदनः सप्त
मं मूर्तिर्लग्नं तत्र शेते सौ मदनमूर्तिशयः सप्तमस्थो लग्नस्थो वेत्यर्थः अशनिर्वाशनिः स्वङ्गः घातक इति यावत् श
निराहुवत् यथैषु स्थानेषु शनिराहू तथैव रविरिति शनिराह्वोरपीदमेव फलमिति भावः अत्र राहुशब्देन केतुरपि
गृह्यते तस्यापि तद्रूपत्वात् यतो वक्ष्यति च वृत्तपातमपरे स्वपाततो राहुरेतीत्यादि अनस्यच स्पष्टमाह श्रीपतिः प्राग्लग्ना



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

इविनंदनेनशशिरविनासहभौजुना चंक्रमादिति १ अथ चंद्रस्य त्रयस्तृतीयं धनं द्वितीयं लाभ एकादशं सुखं चतुर्थं एषु शशी शुभः स्यात् शे
षेष्वशुभः तत्राप्यतिदुष्टान्याह निधनेतिनि धनमष्टमं मूर्तिं लग्नं रिपुः षष्ठं एष्वति गर्हितो निंदुष्टः एतत्प्रसंगेन दोषांतरमाह अशुभ इति
अशुभश्च शुक्रश्च अशुभशुक्रौ तयोः सखा सतथा राजा हः स चिरभ्यष्टं चं पापयुक्तः शुक्रयुक्तो वेत्यर्थः असूनाम्प्राणान् खनति प्राणना
शको भवतीति अर्थाद्बुधयुक्तो गुरुयुक्तो वा शुभः दोषांतरमाह दिनकरेति दिनकरो न करः शं सुखं न करोति दिनकरेण ऊनाः
करा रश्मयो यस्य स तथा अस्तगत इत्यर्थः २ अथ भौमस्य अवनेर्जातो अवनिजो भौमः त्रिभवारिषु रद्वये भवति शेषेषु न व।

त्रिधनलाभसुखेषु शुभः शशी निधनमूर्तिरिपुष्वतिगर्हितः अशुभशुक्रसखः सखनत्यसूनदि
नकरो न करोन करोति शं २ अवनिजस्त्रिभवारिषु रद्वये मृतिकरो मृतिमूर्तिमदाश्रितः॥ ९ ॥

सुदुष्टः तत्राप्यतिदुष्टानि मृतीति मृतिरष्टमं मूर्तिर्लग्नं मदः सप्तमं एतानि आश्रितः एषु स्थित इति यावत् मृतिकरः स्यात् इहा
स्मिन् भौमेन भोगु जिस्तिनभस्तायुनक्तीतिनभोयुक्तस्मिन्नभोयुजि दशमस्थे सति वधूश्वशुतनयासनीतनयामिषभुक् स्यात्
च्युतस्यक्तो नयो यया सा तथा अन्यायमार्गवर्तिनी तनयस्यामिषं मांसं भुनक्तीति तथा अस्यापवादमाह जीवदृशं विना तस्मि।
न् दशमस्थे भौमे गुरुणा दृष्टे सति नायं दोष इत्यर्थः ३ अथ बुधस्य हिमांशुजो बुध द्वादशागृहं विरहय्य पृथक्कृत्य शेषेषु समाभव
तिरिक्तेषु वेश्मसु स्थानेषु वेश्म गृह सुताः पुत्राः अर्थाद्द्विविणं तन्मदः सप्तमास्तमयोस्तु अतिदोषमाह सतियतमिति सबुधः स

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



करेंगितमृत्युगः वधूवरंयमकरेनियतंविदधातिकर्तोनिमकरेणइंगितंचेष्टितंयस्यसमकरेंगितोमदनःसप्तमंमृत्युरष्टमं तत्रगतोवुधोवरंयमहस्तेविदधातिमारयतीत्यर्थः ४ अथगुरोः अंत्यंद्वादशंमदःसप्तमंताभ्यामन्यानिअनंत्यमदानि तेषुद्वादशसप्तमव्यतिरिक्तेषुस्थितोगुरुः सुदंहर्षंश्रियंलक्ष्मींचसृजतिददाति तत्राष्टममहादोषमाह कालगृहइति कालोमृत्युःतद्गृहमष्टमं तत्रस्थितोगुरुःगृहभंगदःस्यात् गृहंभार्यातस्याभंगोमृतिस्तत्प्रदःस तत्प्रसंगेनगुरोर्दोषांतमाह अशुभकृदितिमकरेपिस्थितोगुरुःकरग्रहे अशुभकृत्स्यात् नीचराशिस्थितत्वात् दोषांतरमाह नमृगेति मृगराजःसिंहस्तत्र

इहनभोयुजिजीवदृशंविना व्युतनयातनयामिषभुग्वधूः ३ व्ययगृहंविरहय्यहिमांशुजःसकलवेश्म
सुखेमसुतार्थदःसनियतंविदधातिवधूवरंयमकरेमकरेंगितमृत्युगः ४ गुरुरनंत्यमदेषुमुदंश्रियंसृ
जतिकालगृहेगृहभंगदः अशुभकृन्मकरेपिकरग्रहे नमृगराजगतोजगतोहितः ५॥ ७ ॥

गतोगुरुःजगतोविश्वस्यकरग्रहेनहितःनशुभः ५ अथशुक्रस्यसहसहजंतृतीयंस्वकदेशग्रहणेननामग्रहणात्सपत्नःशत्रुः षष्ठं निमीलनंमरणमष्टमंमन्मथोमदनःसप्तमंराशुमथमदेवगुरुःशुक्रभीतिकृत्स्यात् प्रथमादेवादैत्याःपूर्वदेवाःसुरद्विषः इत्यभिधानात् तेषांगुरुःशुक्रःगुरुभीतिर्महाभयंमरणादितत्कारीभवेत् शेषगृहेष्वष्टसुस्थानेषुमहोत्सवान्वाहयति प्रापयति ददातीत्यर्थः तत्रद्वादशेविशेषः व्ययगतइति सप्तशुक्रोव्ययगतोद्वादशस्थःमत्तांतरादन्येयोमतेसप्तमंतांमध्य





CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

त्वंवहन्तियांचनद्यःकंयेकेप्याहुःलग्नेशुभदौसितेज्याविनिशनिराहुकेतूनांफलंरविवदित्युक्तमेव एवंप्रातिस्विकंभावफलमुक्त्वा
धुनाकर्त्रीलक्षणंविशेषफलंजामित्रफलंचाह ६ तनुर्लग्नंरोहिण्यामित्रंरोहिणिमित्रं रोहिणीभर्ताचंद्रः ड्वापोःसञ्ज्ञाया
मितिह्रस्वः तयोर्लग्नचंद्रयोःखलकृतापापग्रहकृतादुरधरावधूंविधुरांविधुरांकुरुतेदुरधराजातके प्रसिद्धाउभय।
स्थितेदुरधरेतिलग्नाच्चंद्राद्वाद्वितीयद्वादशस्थयोःपापग्रहयोःसतोःपापग्रहकृतादुरधरास्यात् सात्र कर्त्रीत्युच्यते सा
वधूंवाकुरुते अथजामित्रदोषः शुनीतितयोस्तनुरोहिणिमित्रयोःशुनिशारोशपंचाशादशांशगत यासमपुण्यपापग्रहं।

सहसपत्तनिमीलनमन्मथेप्रथमदेवगुरुर्गुरुभीतिकृत् वहतिशेषगृहेशुभमहोन्नतंव्ययगतः
समतांसमतांजरान् ६ खलकृतातनुरोहिणिमित्रयोर्दुरधराविधुरांकुरुतेवधूं ॥ ९ त्यजेत् किन् किमिव।

अपुण्यमिवलग्नंचंद्रोवायस्मिन्नवांशेस्तितस्माच्चतुःपंचाशान्तमेनवांशेयदिपापोस्तितंपापग्रहंपातकंतंदूरंत्यजेदित्यर्थः ७
अथगुरुशुक्रयोर्बाल्यादिदोषमाहसुरगुरुर्भृगुश्चगतेप्यसौरुदयास्तयोःसप्तदिनानिक्षिपतिशुभमितिशेषः कालनैरंतर्ये
हितीयागुरुःशुक्रोवास्तोदयादनंतरंसप्तदिना निबालः अस्तात्प्राक्सप्तदिनानिवृद्धःक्षिपतिप्रेरयतिनाशयतीत्यर्थः इहा।
स्मिन्युगेयुग्मेगुरुशुक्रयुगलेगलदोजसिस्थानादिबलहीने अस्तंगतेनीचस्थितेचेत्यादिसूचितं ८ एवमतांनरान्साम्ये
नबालत्ववृद्धत्वेउक्त्वाहनादिकपरत्वेनतयोःसयुक्तिकंविशेषमाह अंगिरसोबृहस्पतेःशिशुजरत्वंक्रमेणदशचतु।

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰ दृ॰ दशाहानिस्फुटं स्यात् शिशुश्च जरच्च शिशुजरं तौ ज्ञातो जीर्णो जरन्नपीत्यमरः तयोर्भावः शिशुजरत्वं दशदिनानि बालत्वं च
टी॰ तुर्दश वृद्धत्वमिति अत्र स्फुटमित्युक्तेः पूर्वं साधारण्येनोक्तमिति सूचितं उशनसः शुक्रस्य शिशुजरत्वे पश्चिमे पश्चिमदि॰ अ॰ ५
३२ शिक्रमेण दश पंच च अहानि स्यात् पश्चिमोदये दशदिनं बालत्वं अस्ते पंचदिनं वृद्धत्वमित्यर्थः अपश्चिमे पूर्वदिशि त्रि
दशाहं स्यात् त्रयश्च दश च त्रिदश त्रिदश च तानि अहानि त्रिदशाहं तत्कालमैरंतर्ये द्वितीया अह्नः शब्दात् टच् राज्ञाऽन्हा

अनिशारांशामितं स्मरभेन योग्रहमपुण्यमपुण्यमिव त्यजेत् ७ क्षितिपतिसप्तदिनान्युदयास्तयोः
सुरगुरुश्च भृगुश्च गते व्ययोः इह युगेपि युगस्य करग्रहः स्फुटममंगलदो गलदो जसि ८ शिशुजरत्व
महान्युदयास्तयोर्दश चतुर्दश चांगिरसः स्फुटं उशनसो दश पंच च पश्चिमे गतिवशान्निदशाहम

हाः पुंसि त्रिदिनं बाल्यं दशदिनं वृद्धत्वमित्यर्थः कस्मात् गतिवशात् शुक्रस्य वक्रमध्य एव पश्चिमास्तं पूर्वोदयश्च भवति अतोर्कस्य प्रा
गतित्वात् शुक्रस्य पश्चिमगतित्वाच्च गतियोगेन तदंतर वृद्धत्वे सति अल्पदिनैरेव शुक्रस्योज्ज्वलता स्यात् अतो न बालत्व वृद्धत्व
मल्पदिनमुक्तं पश्चिमोदयपूर्वास्तौ तु मार्गगतावेव भवतः अतस्तत्र गत्यंतरेणांतरवृद्धौ सत्यां बहुदिनैरुज्ज्वलता स्यादतस्तैर्बहुदिन राम॰
मुक्तं अतोत्र हेतुर्गतिवशादिति एवं लग्नाद्ग्रहबलान्युक्तानि तत्र केषामवश्यकत्वं तदाह ९ द्युमणिः सूर्यः जीवो गुरुः लवोदयो ३२
शिष्टलोलवोदयशासिनो अंशपतिलग्नपतीनेषां चतुर्णां सुदुर्पतेश्चंद्रस्य इति पंचवली विना चलभ्रुवां फलानि विदिं चिः

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

कमलासनः तेनकृतान्यपिशुभविरिंचिपरिणमंतिपंचानांवलानांसमाहारः पंचवलीचलाचंचलाभ्रूर्यासांताश्चलभ्रुवः। स्त्रियः तासांफलानिविरिंचिः कमलासनइत्यमरः तेनकृतान्यपिशुभंविरिचिंतितानिशुभविरिंचिशुभनाशकानि भृथमाव पुनचनंरिचविरेकेकर्तरिक्विप् परिणमंतिपरिपच्यंते यत्वलग्नेद्युमणिजीवादीनांपंचानांवलंनलभ्यतेतदास्त्रीणांसर्वाणिफलानिब्रह्मकृतान्दपिशुभनाशकत्वरूपंपरिपाकंप्राप्नुवंतीत्यर्थः १० अथद्वादशबुधगुरुशुक्राणांमतांतरमाह व्ययगृहंद्वादशस्थानंयदिबुधभार्गवजीवयुग्मभवति यद्येकोपिव्ययस्थानेनभवेत्तदानरनीरजनेत्रयोः नरोवरः नीरजंकम

द्युमणिजीवबलोदयशासिनासुदृढपतेरिति पंचवलींविना परिणमंतिफलानिचलभ्रुवांफलविरिंचिविरिंचिकृतान्यपि १० व्ययगृहंबुधभार्गवजीवयुग्यदिनतत्कुलमित्रजनेष्वपि कृपणतोनरनीरजनेत्रयोरितिनशक्नमतेक्रमतेक्रमतेमतिः ११ ॥९॥ लंतद्वन्नेत्रेयस्याःसावधूः वरवध्वोः कृपणतास्यात्केष्वपिकुलमित्रजनेष्वपिकुलमित्राणिकुलपरंपरागतमित्राणि यद्वाकुलपुत्रभ्रात्रादिमित्राणिसुहृदः तेचतेजनाश्चतेष्वपिकिंपुनरन्येषु इदंकस्यमतमित्याह इतीतिइत्येवंविधेशक्नमतेइंद्रमतविषये अस्माकंमतिर्नक्रमतेनचलतिएवंविधेइंद्रमते स्माकंबुद्धिःनप्रवर्त्तनइत्यर्थः तथाचरंद्रविवाहपटले बुधभार्गवजीवानामेकोपियदिनव्यये तदौदार्यंनदंपत्योः पुत्रपित्रतिथिष्वपीति ॥११॥ इतिश्रीसकलाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशविर चितायांविवाहवृंदावनटीकायांविवाहदीपिकाया

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

वि·वृं· लग्नावलाध्यायः पंचमोध्यायः ५ एवं लग्नबलमुक्त्वाधुनावधूवरयोश्चंद्रबलविचार आरभ्यते तत्रादौ मतांतरमनूद्य दूष अ·
टी· यति अत्राध्याये रथोद्धतवृत्तानि कन्यकाया वितरणदानं तस्मै कन्यादानाय पूरुषो वरः पुरुषाः पूरुषा नराः इत्यमरः पात्र ६
३३ मात्रं पात्रमेव पात्रमात्रं इति हेतोरस्य वरस्यैंदवं बलेंदोरिदमैंदवं चंद्रबलं केचित्कोविदाबुधाः सन्सुधीः कोविदो बुध इत्य
मरः न वितरंति न ददति वरः पात्रमात्रमिति हेतोर्वरस्य विवाहे चंद्रबलं नावलोक्यमिति केषांचिन्मतं तद्वाक्यं चनाधि
कारो नराणां च विवाहे गर्भशोधन इति तेषामुपहासमाह कोविदामिति तेषां मनस्तन्मनः किलकः विदांकरोतु विचारयतु

इति विवाहवृंदावने लग्नबलाध्यायः पंचमः ५ अथ चंद्रबलाऽध्यायः कन्यकावितरणाय पूरुषः
पात्रमात्रमिति नैंदवं बलं केचिदस्य वितरंति कोविदाः कोविदो किलकरोतु तन्मनः १ ईदृशं यदि
ततः प्रतिग्रहग्राहिणोस्य किमभिप्रपंचितैः सांशनाडिगणयोनिशुद्धिभिर्जन्मलग्नभवनव्ययाष्टमैः २

न कोपि तेषां मानसं तत एव जानंत्वित्यर्थः विदांकुर्वंत्वित्यन्यतरस्यामिति आम् लोटो लोपः लोडंतः कृञोनुप्रयोगश्च तेन विदां राम·
मित्यां मंतमव्ययं अतो न सोर्व्यवधानेपि प्रयोगो घटते यथा रघुकाव्ये तं पातयां प्रथममास पपात पश्चादिति १ एवं ये ३३
मन्वानास्तेषामनिष्टमाह ततस्तस्मादुक्तहेतोः यदीदृशं पात्रमिति हेतोर्वरस्य चंद्रबलं दद्यादिति तदास्य प्रतिग्रहग्राहि।
णो वरस्य सांशनाडीत्यादिभिः अभिप्रपंचितैः सविस्तरं प्रतिपादितैः किं पचि विस्तारे प्रतिग्रहं गृह्णातीति प्रतिग्रहः।

Digitized by Sarayu Trust Foundation Delhi and eGangotri.
CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ग्राही अंशश्च नाडिश्च गणयोनिश्च तेषां शुद्धयः ताभिः सह वर्तमानानि तानि तथा जन्मनि लग्न भवने ताभ्यां व्ययाष्टगानि त
था अयं भावः यत्त्वयोच्यते वरः प्रतिग्रह ग्राहक एव पात्रमात्रं अतोस्यनैं दैवबलं एवं चेन्न हि वरस्य पराशरः प्राह
नवांशभेदादित्यादिनांशशुद्धिः नाड्यो निगणानां शुद्धयश्च जन्मलग्न जन्मराशिभ्यां द्वादशाष्टमगतानि लग्न नवां
शादीनि समर्पंचकं कथमनिपादिता नि दूत्यादीनि वरस्य त्वया पिगृह्यं तेन हि एकं चंद्रबलं कथं न गृह्यते इतित स्यानि
ष्टं ——— किंच २ अस्य श्लोकद्वयस्य एवमादीन्यनेन संबंधः लग्ने भवेद्वा गितिकः नवलवो नवांशः यदि स्वामिना नि

लाग्निकोनवलवः पुमंतक स्वामिनाय दिनयुक्त वीक्षितः संगमं दिशति दीर्घनिद्रया पत्युरिंदु तनुका
मगो ग्रहः ३ चंद्रमस्युपचयान्वितिच्युते चारु गोचरचरैः परै रपि कर्तुरायतिशुभं समग्रं तिदिशन्त्यसित

जाधिपेन युक्तो वीक्षितो वा न स्यात् पुंसः अंतः पुमंतः अंतो वसानं किंच संगममिति इंदुश्च तनुश्चं इं शौनकादयः ४॥
दु तनू ताभ्यां कामगः सप्तमगः जामित्र स्थितो ग्रहः पत्युर्भर्तुर्दीर्घनिद्रया मरणेन सह संगमं समागमं दिशति ददाति दिश
दाने भर्तुर्मरणं कुर्यादित्यर्थः ३ चंद्रमसी ति चंद्रे उपचयान्वृद्धेः सकाशात्परिच्युते वलहीने सति कर्तुर्वरस्य आयति
शुभं उत्तरकालीनं शुभं उत्तरः काल आयतिरित्यमरः समग्रं संपूर्णं संभंजनं भंजे भी वे कुरः विनश्यदितियावत् असित
शौनकादयो मुनयो निर्दिष्टं निकथयंति केरपि परैर्भौमादिभिर्ग्रहैश्चारु गोचरचरैरपि चारुश्चासौ गोचरश्च तत्र

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰ वृं॰ चरंतितेनयथा गोचरेशुभस्थानस्थितेऽपि अयंभावः चंद्रे क्षीणत्वादिनाबलहीनेसति अन्यग्रहाणांगोचरबललाभेसत्यपिवरस्योनर अं॰
टी॰ कालीनंसर्वंशुभफलंनश्यतीत्यसितशौनकाद्योजगुः उक्तंचतैः नकुर्वीतास्तगेचंद्रेदुःस्थितेजन्मराशितः क्रूरग्रहयुतेनष्टेमंग ६
३४ लान्यखिलान्यपीति ४ इत्याद्यनिष्टप्रसंगेनतन्मतंदूषयति नृणांएवमादिफलवादिनः एवमादीनिफलानिपुरुषाणांइच्छं
तिनस्यकंचंद्रबलंकथंनेच्छंतीतितेषामनिष्टं अतस्तेऽपिवरस्यचंद्रबलंस्वीकर्तव्यमित्यर्थः यदुक्तंतैः पुंसांरविबलंग्राह्यमितित
न्स्वीकरोति भानुरपीतियेषांमतंयन्मतं यन्मते उक्तयः यन्मतोक्तयः तासुयन्मतवचनेषु नृजन्मनः नरस्यजन्मराशेःसका
शाद्भानुरुपचये भाव्यइत्यध्याहारः गोचरेहिभानुरुपचयस्थानएवशस्तः तन्नोस्माकमपिइष्टंसंमतमेव तथाचतद्वाक्यं

एवमादिफलवादिनोनृणामैंदवंबलमुशंतिकिंनते भानुरप्युपचयेनृजन्मनोयन्मतोक्तिषुतदिष्टमेवनः ५

योनिःस्त्रीणांशिशिरकिरणश्चित्रभानुश्चपुंसांइत्यादि अत्रयदुक्तंस्त्रीणामेवचंद्रबलंतन्निराकृतंयदुक्तंरविबलमितितदस्मा
कमपीष्टमितिभावः अतोवरस्यचवध्वा अपिगोचरेणचंद्रबलंचग्राह्यमितिसिद्धं वक्ष्यतिच योषितांगुरुपतंगगोचरइत्या राम॰
दि ५ एवमनिष्टप्रसंगेनतन्मतंनिरस्ययुक्त्यन्तरेणापिपुनर्दूषयति त्रिवर्गपतिनानरेणशशिबलंनसमाप्यतेकन्ययाद ३४
त्वासमाप्यतेलभ्यते त्रिवर्गपतिनेति हेतुगर्भं धर्मार्थकामानांस्वामिनापुरुषेणकन्याद्वारायदिचंद्रबलंप्राप्यतेतर्हिद्र
हविवाहसमयेयत् गोमहीमहिष्यादिदीयते नहितद्बलंतेषांगोमहीमहिष्यादीनांयच्चंद्रबलंतन्नस्यवरस्यादिशादेहि गो

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

धेनुः महीसेनवाटिकादिमहिषीप्रसिद्धा आदिशब्देन दासीदासशय्यादीनां ग्रहणं यदि पात्रमात्रमिति हेतोः कन्यायाश्चंद्र
बलेन देवज्ञस्य तर्हि गवादिकं यद्दीयते तेन स्यापि यच्चंद्रबलं तद्रूपि वरस्य भवेदित्यतिप्रसंगः यद्वा ऽयमन्वयः चेत्त्रिवर्गपति
नान्तरेण शशिबलं न समाप्यते तेन प्राप्यते यदि कन्यया समाप्यते तर्हि इह विवाहे यज्ञवादिकं दीयते तस्य वादेस्तत्फलं तस्य चंद्रस्य
बलं दिशेत्यतिप्रसंगः ६ यच्च परमतेयोनिः स्त्रीणां शिशिरकिरण इत्यादि तदनुद्रूषयति इंदुश्चंद्रमाः इंदुवत् इंदुवदनानुगं बा
लं यच्छति ददाति इंदुरिव वदनं यस्याः सा इंदुवदना तां अनुगच्छतीति इंदुवदनानुगं अंगनानुसारं यत इंदुः युवतिग्रहः

न त्रिवर्गपतिनान्तरेण चेत्कन्यया शशिबलं समाप्यते । दीयते यदिह गोमहीमहिष्यादि तर्हि दिशतस्य
तद्बलम् ६ इंदुरिंदुवदनानुगं बलं यच्छतीह युवतिग्रहो यतः । तन्नृणामपि कथं षडष्टगः खंडयत्ययमसू।
(न्प्रसूतिषु ७॥

स्त्रीग्रहः तस्मात्तद्बलं स्त्रीणामेव न तु नराणामिति चेत्तर्हि अयं चंद्रमाः प्रसूतिषु जन्मकालेषु षडष्टमः
सन्नृणां पुरुषाणामपि असून्प्राणान्कथं खंडयति अयमर्थः चंद्रमा स्त्रीग्रह इति कृत्वा विवाहे स्त्रीणामेव चंद्रबलं ग्राह्यं
नहि तेनैव हेतुना जन्मकाले षष्ठाष्टगेन चंद्रेण नृणामरिष्टं न कार्यं तच्च तेषामप्यस्ति अतो वरस्यापि चंद्रबलं ग्राह्यमि
ति सिद्धं ७ एवं न केवलं पुरुषफले जातके न चंद्रः स्वीकृतः किं त्वन्येष्वपीत्याह होरया जातके न हिमरश्मिरादृतः स्वी
कृतः केषु सुनफानफादिष्वपि पुंस्फलेषु योगेषु पुंसां फलं येषां तेन तथा रविवर्जद्वादशगैरनफा चंद्राद्द्वितीयगैः सुनफा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰ वृं॰ दृत्यादिषु चंद्रयोगेषु अन्येष्वपि चंद्रकृतेषु राजयोगादिष्वपि जातकेन पुरुषफले चंद्रः क्षीणफलद इत्यर्थः अतो वरस्यापि चंद्र श्रीः
टी॰ वलं विलोक्यमिति सिद्धं अथ कृष्णपक्षे केचित्तारावलिपसीमाहुस्तद्दूषयितुमुपन्यस्यति अत्रिरिति वहुले कृष्णपक्षे
३५ पि तारकापते श्चंद्रस्य वले सति तारका वलीयसी अत्रिमुनिराह कृष्णपक्षे पि न केवलं तारा वलीयसी किंतु तारकापति
वले सति अतः कृष्णपक्षे चंद्रवलालाभे सति तारावलं न प्रमाणमिति मुनेराशयः ८ अथ मतांतरं दूषयितुमुपन्यस्यति
विकलं वर्म शरीरं यस्याः सा विकलवर्मा शरीरं वर्म विग्रह इत्यमरः तस्मिन्विकलशरीरे प्रोषिते प्रवासं प्राप्ते वा प्रियेभ

होरयापि हिमरश्मिराहतः पुंस्फलेषु सुनफानफादिषु अत्रिराह वहुलेपि तारकां तारकापतिवले वली
यसीम् ८ प्रोषिते विकलवर्मणि प्रियेतोल्लिलिः स्त्रियमियमकार्यिणी अस्तु किंतु न पतिः प्रतीपतां सान्यथा घटयितुं पटीयसी ९॥

र्तरि सति तोल्लिलिर्मुनिः स्त्रियं कार्यिणीं इयवरोस्तु न कार्यं विद्यते यस्याः सा कार्यि
णी कार्यकर्त्री अतद् इति नवावितिमत्वर्थे इनिः कृत्स्नस्य यात्रस्य निषेधे पि कश्चिद्विधानात् कृष्णपक्षे चंद्रस्य क्षीणशरीरत्वा राम॰
त् वनस्पत्यादिषु प्रोषितत्वाच्च तत्तुल्यास्ताराया स्ववलं मुख्यमिति भावः एतदप्युपेत्य दूषयति अस्तु किंत्विति तारकाका ३५
र्यिणी अस्तु तर्हि किंतु सा तारा अन्यथा प्रकारांतरेण पतिप्रतीपता भर्तुरभिमतादपरीत्यं घटयितुं न पटीयसी न समर्था अ
तिशयेन पटुः पटीयसी सा स्वयं कर्त्री भवतु परंतु भर्तृप्रतिकूलकार्ये न क्षमेत्यर्थः अतः कृष्णपक्षे चंद्रवलाभावे तारावलं न

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

अथ यन्मति कृष्णपक्षे नष्टश्चंद्र इत्युच्यते तद्विषयमाह सचंद्रमाः वहुले कृष्णपक्षे केवलं क्रौर्यमेति अमां वसन् सन्नैव न
श्यति तमां क्रूरस्य भावः क्रौर्यं अतिशयेन नश्यति तिनमां आख्यातात्तमप् आमेच तदंतमव्ययं कृष्णपक्षे चंद्रः क्रूर
त्वमेव प्राप्नोति क्षीणत्वात् दर्शानुवर्तमानश्चंद्रो नातितरां नश्यति किंतु ग्रहगोचरोप्येव अतो नष्ट इत्युच्यते यद्वा
अमावसन्निति पाठः तत्र अमेत्यव्ययं सहार्थे अमात्याः कं समं सह इत्यभिधानात् सूर्येण सह वसन्निति सूर्यः एष चं
द्रः तत्र अमायां अमासमीपे च यद्दिनास्ति अतितरां नष्टो भवति तत्तदा जविष्णुजन्मकालेषु तन्द्रुतातेन चंद्रेण कृता

क्रौर्यमेति वहुले सकेवलं नैव नश्यति तमाममां वसन् नास्ति चैषयदि तत्र तत्कथं तत्कृता जनिपुरि
ष्टरौद्रता १० पार्श्वगे निजपतौ कुटुंविनी दुर्वलेपि तदभीष्टकार्यकृत् तारकापि शशिनोऽनुकूलता
संभवे भवति पक्षपातिनी ११ ॥ ॥

रिष्टरौद्रता कथं स्यात् रिष्टस्य रौद्रता उग्रत्वं रिष्टस्य अतिशयिता यदि
तत्र चंद्रस्य सर्वथा अभावस्तदा तज्जनितमत्युग्रमरिष्टं कथं स्यात् अतोऽमायां नैव नश्यतीति किंतु प्रकाशहीनः
तिष्ठतीति ग्रहगणिते प्रत्यक्षमप्यस्ति यदि स नष्टो भवति तदा तत्कृतं सूर्यग्रहणं कथं स्यादित्यादि १० अथ सि
द्धांतमाह दुर्वलेपि निजपतौ स्वभर्तरि पार्श्वगे समीपवर्तिनि सति कुटुंविनी कुटुंवनिर्वाहकात्पत्नी तदभीष्टका
र्यकृत्स्यात् तस्य भर्तुर्यदभीष्टं कार्यं तदेव करोति ननु तत्प्रतिकूलं एवं तारकापि शशिनश्चंद्रस्यानुकू

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



लतासंभवेत्तनुकूलत्वाल्लाभेसतिपक्षपातिनी अनुकूलत्वं विलोक्यमित्यर्थः अतः कृष्णपक्षेपिचंद्रबलसद्भावेताराबलंग्रा 
ह्यमितिसिद्धं तथाचाहुः चंद्रस्यसर्वदाबलमसितेताराबलंग्राह्यमिति ११ इति श्रीसकलागमाचार्यवर्य श्रीकेशवसांवत्सरात्म
जगणेशविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां चंद्रबलाध्यायः षष्ठोऽध्यायः ६ अथकेचिद्दूरहत्वेराहोर्नैम
ल्यं तेनदर्थस्वकौशलंदर्शयन्राहुसत्ताध्यायंवदति तत्रादौवराहोक्तमार्गमप्रामाण्येनदूषयति एतदारभ्यत्रयोदशश्लो
कृत्तवृत्तानि यद्वराहमिहिरोनराहुरित्याहराहुर्नास्तीतिब्रूते कथंभूतं उच्चकैस्तांडवितवाहुः उच्चैरेवोच्चकैः अव्ययसर्वना
म्नामकच्प्राक्टेरित्यकच् तांडवंनृत्यविशेषः तांडवंजातंययोस्तौतांडवितौतौवाहूयस्यासौतथा उच्चैर्नर्तितवाहुः

इतिविवाहवृंदावनेचंद्रबलाध्यायः षष्ठः ६ अथराहुसत्ताध्यायः यद्वाराहमिहिरोनराहुरित्याहतांडवितं वाहुरुच्चकैः ११

सोपहासमिदं विशेषणं अत्रास्मिन्विषयेतन्त्रथविमाथिनीसंहितास्मृतिसहायिनीश्रुतिर्वहति तस्यपंथास्त
त्यथः अरुकपूरव्धूःपथामानसइत्यप्रत्ययः तंविमथ्नातितथा तस्यवराहस्ययोमार्गस्तस्यभंगकर्त्री संहिताप्रत्ययश्चताःसहायाः 
संतिअस्यासातथासंहितास्मृतिसहिताश्रुतिर्वहति प्रसिद्धास्तीतियावत् राहुर्नास्तीति वराहेणयदुक्तंतत्संहितास्मृतिश्रुतिभिरा 
गमैर्विरुद्धमितिभावः तद्यथावराहेणवृत्तसस्यस्वच्छायेत्यादिनाएवमुपरागकारणमुक्तमिदंदिव्यदृग्भिराचार्यैः राहुरकारणम
स्मिन्नित्युक्तः शास्त्रसद्भावादितियोसावसुरोराहुरित्यादिनाचग्रहणेराहुर्नकारणमिति प्रतिपादितं तद्विरुद्धाःसंहिताजिह्वाव

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

लेद्विपरित्तः स्तिमिरतुदो मंडलं यद्विसलेहमिति अशनिभयसंप्रदायी पाटलिकुसुमोपमो राहुरित्यादयः स्मृतयश्च सर्वं भूमिसमं दानं सर्वे ब्रह्मसमा द्विजाः सर्वं गंगासमं तोयं राहुग्रस्ते निशाकरे इति सर्वेषामेव वर्णानां सूतकं राहुदर्शनमित्यादयः श्रुतयश्च तत्र माध्यंदिनी श्रुतिः स्वर्भानुर्ह वा आसुरिः सूर्यं तमसा विव्याधेति अथर्वश्रुतौ हं सोपनिषदि च सोहं घनमिति घनमिति किलिकिलिला। स्यराहोः शिरमाच्छादयति भा क्लिन्नपाप्मा वै च्छाया रजनीरूपा पाप्मानं करोतु राधर्षयति कर्षयति घृणी विरश्मिं विरेचयति पृथ्वीमाच्छादयति दीप्तिमाच्छादयति द्युतिमाच्छादयतीत्यादयः स्वतन्त्र्यकौशलदर्शनाय ग्रंथकृतः पांडित्यमात्रयतो राहुर्नास्तीति वराह

संहितास्मृतिसहायिनी बहस्यत्र तत्यथ विमाथिनी श्रुतिः १ नैर्ऋतीदिगियमस्य दिक्पते ध्यानदानबलिभिः
फलाप्तये वेश्म चास्य शशभृद्विमंडलक्रांतिमंडले मिथश्च तुल्यथं २॥ ११ होन ब्रूते किंतु ग्रहणोसैनकारणमितिन

च्छादकत्वत्यर्थः अस्य स्मृत्यादिविरोधोपि नैव परिहृतः पोस्मावसुरो राहुस्तस्य वरो ब्रह्मणा पुराऽन्तः आप्यायनमुपरागे दत्तहुताशेनतेन भवितान स्मिन्कालेसान्निध्यमस्य तेनोपचर्यं ते राहो रित्यादिना च अथवराहोक्तिः सम्यगेव १ अथराहोरस्तित्वे प्रमाणांतराण्याह अस्य राहोर्दिक्पतेर्दिशाधिपतेरियं प्रसिद्धा नैर्ऋती दिक् अस्ति प्राच्यादिशार विस्मितेत्यादिना राहो नैर्ऋती दिक् प्रसिद्धा किंच अयं ध्यानदानबलिभिः फलाप्तये अभीष्टफलसिद्धये भवति तत्र ध्यानं ब्रह्मयामलादौ करालवदनः खड्गचर्मसमालीवरप्रदइत्यादि दानं गोमेदादि बलयः पूजाकृष्णपुष्पोपहाराद्यैस्तैः फलाप्तये भवति एभिः प्रमाणै राहुरस्तीति भावः ननु

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

यथान्येषांग्रहाणांक्रांतिवृत्ते मेषादिग्रहे भ्रमणमस्ति तद्वदस्यनास्तीति चेन्नत्राहोःवेश्मचेति अस्यराहोः शशभृद्विमंडलक्रांति
मंडलमिथश्चतुष्पथंवेश्मचास्ति चत्वरःपंथानःसमाहृता इति चतुष्पथं द्विगोःक्लीबत्वं पूर्ववदप्रत्ययः विमंडलं विक्षेप
मंडलंनामैकदेशेननामग्रहणं शशभृतः विमंडलंचक्रांतिमंडलंचेत्तयोर्मिथः परस्परं चतुष्पथं शशभृद्विमंडलमिथश्चतुष्प
थं चंद्रस्यशरवृत्तक्रांतवृत्तेतोयःसंपातश्चतुष्पथरूपस्तदेवास्यस्थानमित्यर्थः तच्चलनेनअस्यापिचलनं सिद्धं तदेवचंद्र
स्यशरपातस्थानंग्रहगणितेप्रसिद्धं ननु दिक्कृदेशकालावरणादिभेदान्नच्छादकोराहुरितिब्रुवंतीतिग्रहगणितेग्रंथसंत
द्विरुद्धाःस्मृत्यादयःसंति २ अतस्तत्समाधानमाह सराहुरंधकारचरत्वाद्वहन्सन्महीच्छाययासहसोममंडलं विशति अंध॰

सोंधकारचरतांवहन्महींछाययाविशतिसोममंडलं दीपितापरदलेंदुमंडलच्छाययासहचसूर्यमंडलं ३॥

कारेचरतीति अंधकारचरस्तस्यभावस्तया भूछायाकिलांधकाररूपिणीसोप्यंधकारचरःअतस्तत्साहित्येनचंद्रमंडलं विशति
आच्छादयतीत्यर्थः दीपितेति अंधकारचरतांवहन्संदीपितापरदलेंदुमंडलच्छाययासहसूर्यमंडलंचविशति दीपितमप
रदलंउपरिस्थितदलंयस्यतत् दीपितापरदलंतच्चतदिंदुमंडलंचेतस्यच्छाययातथा दर्शेकिलचंद्रस्योर्ध्वदलंप्रकाशं अतो
धकाररूपस्यचंद्रमंडलाधोभागस्यच्छाययासहसोप्यंधकाररूपःसूर्यमंडलंप्रविश्यच्छा दयतीति अनेनगोलगणितस्य
स्मृत्यादीनांचविरोधःपरिहृतः तथाचोक्तंगोलाध्यायः राहुःकुभामंडलगःशशांकंशशांकगःछादयतीनविंबमिति ३॥

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ननु शरवृत्तक्रान्तिवृत्तयोः संपातो कथं राहुरस्तीति तत्राह पतनं पातः वृत्तयोः शरवृत्तक्रान्तिवृत्तयोः पतनमेव पात इत्याहुर्गोलविदः यतो वृत्तयोः संपातस्ततः पात इत्युच्यते अत्र पाते स्थितो राहुः आपतंतं आगच्छंतं अमृतद्युतिं चंद्रमसमीक्षते गृहीतुमवलोकयतेकिलेत्यागमनमेवागमं विशेषणद्वारेणाह सुधेति सुधा अमृतं सुधा च स्नानदानहवनं च तेषामंशो विभागस्तत्र लालसस्तत्परः अत्र संपाते स्थितो राहुरमृतांशोर्ग्रहणनिमित्तस्नानादीनां मंत्राश्च ब्रह्मवरमदानान्ममभविष्यतीति चिंतयन्नमृतद्युतिं गृहीतुमीक्षत इति भावः । चंद्रो हि अमृतद्युतिः राहुश्च सुधालालसः अतस्तं गृहीतुमीक्षत इति युक्तं रविग्रहेपि चंद्रच्छायासांनिध्यमस्त्येव ब्रह्मवरप्रदा

वृत्तयोः पतनमेव पात इत्याहुरत्र किल राहुरीक्षते आपतंतममृतद्युतिं सुधास्नानदानहवनांशलालसः ४

सैंहिकेयगृहतामुपेयुषो दूरगो वियति वृत्तपातयोः ग्रासमेति न रविर्न चंद्रमा गृह्यते स खलु पार्श्वगस्तयोः ५ ॥

नादिकं ब्रह्मपुराणादौ प्रसिद्धं अत आगमात्तत्र संपाते राहुरस्तीति भावः स तदेवोक्तं वराहेण योसावसुरो राहुस्तस्य वरो ब्रह्मणा पुरा दत्तः आप्यायनमुपरागे दत्तहुतांशेन तेन भवितेत्यादि ४ एवं चेत्तर्हि प्रतिपर्वणि ग्रहणं कथं न स्यात्तत्राह सिंहिकाया अपत्यं सैंहिकेयो राहुस्तस्य गृहं तस्य भावः तां सैंहिकेयगृहतां उपेयुषोः प्राप्तयोः उपेयुषोरित्युपेयिवांसौ तयोरुपेयुषोः इण्गतौ उपेयिवाननाश्वाननूचानश्चेति क्वसंतो निपातः वृत्तपातयोः शरवृत्तक्रांतवृत्तसंपातयोर्दूरगो रविर्वियति आकाशे स्थितः ग्रासं नैति न प्राप्नोति न च चंद्रमा ग्रासं एति तयोर्वृत्तपातयोः पार्श्वगः समीपवर्ती सरविश्चंद्रश्च स खलु निश्चितं गृह्यते राहुणेति शेषः यद्वा कर्मकर्त्तरि रूप

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰ वृं॰ एतदुक्तं भवति शरच्चन्द्रक्रांतिवृत्तयोर्ह्यौ किल संपातौ एकश्चंद्रपातस्थानं द्वितीयस्तत्सप्तमं चेति तेष्वपि राहुस्थाने एकं राहो अं॰
टी॰ रपरं केतोश्चेति तयोर्दूरगो रविश्चंद्रो वा ग्रासं तेनेति शरबाहुल्यात् शरो हि राहुचंद्रबिंबमध्ययोरंतरं अतो मानैक्यार्धादूने ७
३८ शरे सत्येव ग्रहणानां तत्त्वाधिके एतद्ग्रहणानि ते प्रसिद्धं ५ एवं गणितेन राहुसंज्ञां च प्रतिपाद्य अधुना संहिताजातकाभ्यामप्या
ह स राहुः सूर्यवद्भावगोचरफलेन हीयते यतोसौ राशिचक्रवसतिः राशिचक्रे क्रांतिवृत्ते वसतिः स्थानं यस्य स तथा सूर्यो हि क्रां
तिवृत्तेस्ति तत्र राहुरपि चंद्रपातत्वात् अतः संहितासु सूर्यस्य यानि दशानि भावफलानि तानि दशानि राहोरप्युक्तानि अतो रा

राशिचक्रवसतिः स सूर्यवद्भावगोचरफलैर्नहीयते रिष्टभंगजननैकनायको होरिकैरपि स केन की
र्त्यते ६ एष शेषखगपाततुल्यतां नेति चेद्रविपर्वगर्वितः जातकादिषु यथेंदुमंदिरात्किं तथा न फलम

होर्भावगोचरफलसद्भावाद्राहुरस्तीति भावः एवं जातकेपि रिष्टभंगो नि राहुः रिष्टभंगजननैकनायको भं ‹‹ न्यराशितः ७
गश्च जननं च भंगजनने रिष्टस्य भंगजननेन तयोरेकश्चासौ नायकश्च स तथा होराविदंति तेहोरिकाः तैः के ः कीर्तितः अपितु रा राम
हुः सर्वैर्जातकविद्भिः रिष्टभंगस्य रिष्टजननस्य च एक एव कर्ता कीर्तितः एव तद्यथा राहुश्चतुर्थस्थो मरणाय निरीक्षितो ३८
भवति पापैरित्यादीनां रिष्टजननानां अजवृषभकर्किलग्ने रक्षति राहुः समस्तपीडाभ्यः इत्यादीनां च कर्ता ग्रहांतराणां पे
क्ष एक एव कीर्तितः अतोसावपि जातकेनापि स्वीकृत इति भावः ६ नन्वसौ किल चंद्रपातस्तस्य चेद्ग्रहत्वं तर्हि भौमादिवा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

तानामपि कथंन ग्रहत्वमिति तत्राह एष चंद्रपातः शेषखगानां भौमादीनां ये पातास्तत्तुल्यतां नैति न प्राप्नोति यतोयं चंद्रविंब
वेगगर्वितः चंद्रविंबवेगगर्वितः चंद्रविंबग्रहणाकर्तृत्वेनगर्वप्रासेः यतस्तस्यसंनिहितावेव चंद्रार्कौ ग्रासं प्राप्नुतः नत्वि
तरेषां अतोसावन्यपातसाम्यं न प्राप्नोतीत्यर्थः किंच जातकादिषुजातकसंहितास्वरशास्त्रयामलादिषु यथाइंदु
मंदिरात्चंद्रराशेः फलंतेषां भौमादीनां राशितः फलंनास्ति अतोयथा सर्वत्रफलानि चंद्रराशेस्तथा तत्पातराशेरपि
अतश्चासौ शेषपातसाम्यं नैति ७ एवं प्रथमे संपाते राहुस्थितिमुक्त्वा द्वितीयेपितत्स्थितिमाह चंद्रस्य शरवृत्तक्रांति
वृत्तयोः संपात एव चंद्रपातस्तद्राहोस्थानमिति किलोक्तं तस्मात्षड्भांतरे द्वितीयः संपातस्तमपरं वृत्तपातं राहुरेति गच्छ

वृत्तपातमपरं स्वपाततो राहुरेति समयात्स्वयंभुवः मंदिरं तदपि तस्य तद्गतस्त्यज्यते जगति दिव्यरिष्टवत् ८

ति तत्राप्यस्ति तल्लोके केतुरुच्यते तदपि राहोः स्थानं कस्मात् स्वयंभुवो ब्रह्मणः समयात् वरस्य संकेतात् समयाः शपथाचा
रकालसिद्धांतसंविदः इत्यमरः संपातद्वयस्यास्मीवर्तितोश्चंद्रार्कयोर्ग्रहणसंभवः अतो ब्रह्मवरप्रदानात् संपातद्वयेपि राहोर
वस्थितिरागमसिद्धा तद्गतस्तस्मिन् द्वितीयसंपाते गतो राहुर्जगति इहलोके दिव्यरिष्टवत्त्यज्यते दिवि भवं दिव्यं तच्च तद्रिष्टं च
तद्वत् दिव्यान्यरिष्टानि नक्षत्रजानि तेषु मुख्यं दिव्यं केतुः अतोत्र दिव्यरिष्टशब्देन केतुर्गृह्यते द्वितीयसंपातेगतो राहुरेव लो
के केतुनाम्नास्त्यज्यत इति भावः यतो ब्रह्मपुराणादिषु विष्णुनासुदर्शनच्छिन्नराहोः शिरोराहुरपरं केतुरित्युक्तं अतएकमे

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



वशाद्दीर्घहि धाभूतं राहुकेतुसंज्ञमिति ८ ननु एवं शेषखगेत्यादिना यदुक्तं सर्वग्रहेषु मध्ये फलदातृत्वे चंद्रस्य मुख्यत्वात्तस्यापि फलदातृत्वं नहि तदुच्चस्यापि तत्कथं न भवेदित्यनूद्य परिहरति शीतगोः उच्चं फलदं किलास्तु किंवत् पातवत् केन हेतुना गतिवशेन यथा प्रागुक्तं चंद्रस्य फलदातृत्वमुख्यत्वात्तत्पातस्य फलदातृत्वं गतिसद्भावात् तद्वत्तदुच्चस्यापि गतिसद्भावात्फलदातृत्वं किलास्त्विति भावः इति चेदस्तु नहि किंतु हि यस्मात्कारणात्तदुच्चं विरिंचिना ब्रह्मणा ग्रहपदे ग्रहपंक्तौ न निवेशितं न स्थापितं उच्चस्य ग्रहत्वाभावात्फलदातृत्वमिति भावः ९ एवं चंद्रोच्चस्य फलदातृत्वमागमाभावान्निरस्य गोलयुक्त्यापि



पातवद्गतिवशेन शीतगोरुच्चमस्तु फलदं किलेति चेत् अस्तु किंतु नहि तन्निवेशितं राहुवद्ग्रहपदे विरिंचि
ना ९ किंच गोलगणितानि तन्महीमध्यकेंद्रमधिकृत्य तेनिरे ॥ १०

दूषयति किंच युक्त्यंतरेणापि दूषणमस्ति यत् गोलगणितानि नाडीनिकक्षावृत्तादीनि महीमध्यकेंद्रं महीमध्ये वृत्तस्य मध्यं किल केंद्रमुक्तमिति सिद्धांतोक्तेः तत् अधिकृत्य प्राथम्येन धृत्वा तेनिरे विस्तृतानि कर्मकर्त्रि रूपं यतः सर्वेषां कक्षावृत्तनाडिकावृत्तादीनां मध्यं भूगर्भ एव एतद्गतस्तस्मिन् भूगर्भे स्थितो नरः पातवर्त्मनि पातमार्गे स्थितं स्फुटशशिनं व्युच्चहेतुमीक्षते पश्यति अपि रेवार्थे विगतः उच्चहेतुर्यस्य सो तथा उच्चस्य हेतुं विनापीत्यर्थः एतदुक्तं भवति फलभंग्या कक्षावृत्तस्य भूगर्भो मध्यं प्रतिवृत्तस्य मध्यं भूगर्भात् स्वफलज्यांतरे तत्र प्रतिवृत्ते मध्यमचंद्रस्तदुच्चं च तन्मध्ये चंद्रकेंद्रकक्षावृत्ते तु स्फुटचंद्रः तत्रैव तत्त्वात्ताः अथ उक्तं च चंद्रस्य कक्षा।



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वलयेहि पातइति अतोभूगर्भस्थोद्रष्टाकक्षावृत्तेस्फुटचंद्रे पश्यतिननैवतस्यानश्च अतोतयोरेकवृत्तचारित्वाच्चंद्रवशेनतस्यातस्यापि
फलदातृत्वं ननूच्चस्यअतउक्तंव्युच्चहेतुमिति एतत्तुग्रंथकृतोतज्जनानाव्यामोहनमात्रं वास्तवंतुनैतत् तथाहियद्यपिप्रतिवृ
त्तस्यनीचोच्चवृत्तस्यवायदुच्चस्थानंतद्देवोच्चमित्यस्ति तथाप्युच्चहेतुंविनाकक्षावृत्तेस्फुट चंद्रदर्शनंकथंस्यात् स्फुटचंद्रस्यका
रणमुच्चंभवत्येव उक्तंचसूर्यसिद्धांते अदृश्यरूपाःकालस्यमूर्तयोभगणाश्रिताः शीघ्रमंदोच्चपाताख्यग्रहाणांगतिहेतवइत्यादि
अतोव्युच्चहेतुमिति यदुक्तंतन्नचतुरस्रमितिप्रतिभाति अतएवयुक्त्यंतरेवक्ष्यति अर्कमर्कजेत्यादि १० अथपटुक्तंगतिवशेन

तद्गतःशशिनमीक्षतेस्फुटं व्युच्चहेतुमपिपातवर्त्मनि १० अत्रयेनविकलादलार्धमप्यन्हियांतिफ
लमस्तुकिंततःतावदेवफलगौरवंगतिर्यावतीत्यधिफलःकलानिधिः ११ ॥ ९ तद्दृढयन्अन्यपातानांफलदातृ
त्वासंभवं प्रतिपादयन्चंद्रस्यफलगौरवंदृढयति अत्रयेभौमादीनांपाताःविकलादलार्धंविकलायादलंतदर्धमपिअन्हिदिवसेन
यांतिनगच्छंतितेभ्यःफलंकिमस्तुअपितुनास्तुनहितेवर्षशतेनापिकलामात्रंचलंति अतोयावतीगतिस्तावदेवफलगौरवंयथा
यथागतिरधिकातथातथाफलगौरवं अल्पकालेनैवफलवैफल्यवैचित्र्यात् इतिहेतोःकलानिधिश्चंद्रमाःसर्वग्रहेभ्योधिफ
लःअधिअधिकंफलंयस्यासावधिफलः अन्यग्रहाणांगतियोगोपिचंद्रगतिसमोनस्यादतोसावधिकफलइतिभावःतथा
चोक्तंसकलखगग्रहाःसर्वेएकतःशशलांछनःततोधिकतरश्चंद्रस्तस्माच्चंद्रंपरीक्षयेदिति ११ अत्रयःसंपातःसएवरा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि.वृं. हुरित्यर्थे प्रमाणांतरफलमाह किंचप्रमाणांतरमप्यस्ति जिष्णुजोब्रह्मगुप्तः सोमः प्रसिद्धः रोमको मुनिः मयो मयासुरः आदिश अ.
टी. ब्देन पितामहवसिष्ठादीनां ग्रहणं ननु एते तांत्रिकाः शास्त्रप्रणेतारः राहुपातयोर्नामनी पर्यायेणैव विदधुः पातपर्यायेण राहुश ७
४० ब्दं प्रयुंजते घटकलशवत् तथा चोक्तं कुमुदिनीपतिपातो राहुमाहुरिहैके पितमेवेति अतो यः पातः स एव राहुरिति सोमरोमकादीनां
मुनेवृंत स पात एव राहुरित्यर्थः १२ ननु पातस्य एव राहुर्भवतु उच्चस्य फलदातृत्वाभावः किमायातं तत्र ह्युच्चहेतुमिति कारणासुपन्यस्तं
तदपि सूक्ष्मदृष्ट्या विचार्यमाणे संदिग्धमित्याशंकां मनसि धृत्वा तन्निरासे युक्त्यंतरमाह तदुच्चं यदि पृथग्भवेत्फलदातृत्वे स्वतंत्रं

किंच गोलगणितेषु जिष्णुजः सोमरोमकमयादयोपि च पर्ययेण तनुराहुपातयोर्नामनी विदधुरेवतांत्रि
काः १२ अर्कमर्कजकुजार्यतुंगतां किं नयंति यदि तत्पृथग्भवेत् ॥ ९ भवेत्तर्हि सोमरोमकादयः अर्कजकुजार्यतुंगता अर्कं ।

किं नयंति आर्यो गुरुः अर्कजकुजार्याणां तुंगं तत्स्वभावस्तथा शनिभौमबृहस्पतीनां शीघ्रोच्चं सूर्य एवेति कथं वदंतीति यद्येषां सूर्य
एव शीघ्रोच्चं तदा तस्य फलदातृत्वे पृथक्त्वं न स्यात् तत्तस्मात्कारणादियं कल्पना उच्चं हि कल्पनामात्रं मंदफलानि साधनायेति राम.
उक्तं च गोलाध्याये यः स्यात्प्रदेशः प्रतिमंडलस्य दूरे भुवस्तस्य कृतोच्चसंज्ञा सोपि प्रदेशश्चलतीति तस्मात्प्रकल्पितां तुंगगतिर्ग ४०
निज्ञैरिति अत उच्चस्य कल्पनामात्रत्वान्नफलदातृत्वं तर्हि पातोपि शरसाधनाय कल्पनामात्रं कथं तस्यापि फलदातृत्वं भवेदित्या
शंकायामाह उच्चमुच्चरतीति उच्चरोपि न फलमुच्चरत् कथयत् कोपि नस्मृतः शीपितं फलं यस्मिन् तत्तथा उच्चस्य फलं कुत्रा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

पिनश्रुतं तस्य फलश्रवणाभावात्कल्पनामात्रत्वमितिभावः अतः पातस्य ग्रहत्वं युक्तं उच्चस्य फलदातृत्वाभावे ग्रंथकृता किम र्थमेतावत्प्रपंचितं पर्यवसानं तु आगम एव अतः प्रथमत एव तत्रागमाभावः कारणं कथं न वक्तव्यमिति १३ ननु दिनादेराधि पत्यं तस्य पातस्य कथं नास्तीति तत्राह शालिनीवृत्तं अहोराहोरहोरात्रवर्षाधिपत्यं नास्ति अहोरात्रं वारः वर्षं वत्सरः तेषामा महोरात्रादीनामुपलक्षणं तेषां स्वामित्वं राहोर्नास्तीति सत्यं सत्यमेवेति व्यंग्योक्तिः तथापि सर्वव्योमगानां अधीशौ पुष्पवंतौ चंद्रार्कौ यस्य राहोः छायापि नष्टिं चूर्णयति पिष्टपेषणेन तस्य राहोः स्वामितायाविनष्टिः विनाशः कास्तेन कुत्रापीति सकयो

कल्पनातद्यिमुच्चमुच्चरन् कोपि रोपितफलं न च श्रुतः १३ राहोर्नाहोरात्रवर्षाधिपत्यं सत्यं सर्वव्योमगानाम
धीशौ यस्य छाया पुष्पवंतौ पिनष्टि क्वास्ते तस्य स्वामितायाविनष्टिः १४ प्रतिदिनं खचरः प्रचरन् फलं किम

तयापुष्पवंतौ दिवाकरनिशाकरावित्यमरः ग्रहाधीशौ चंद्रार्कौ यस्य छायामात्रं विह्वलयति त (( पियच्छति चारफलो हि सः स्य स्वामित्वं नास्तीति वक्तुं न शक्यते अतः पारंपर्येणादिनवर्षादीनामप्याधिपत्यं तस्यास्त्येवेति भावः १४ अथ गतिवशात्फलमिति प्रतिपादयन् राहोर्गतिसद्भावे प्रमाणमाह द्रुतविलंबितं खचरः प्रतिदिनं प्रचरन्सन् किमपि फलं यच्छति हि यस्मात्कारणा त्स खचरः चारफलः चारेण गत्या फलं यस्य सः तथा यस्मात्खचरः चारफल इत्युच्यते तस्माद्यथा यथा यो ग्रहः किंचिच्चलति तथा फलं यच्छतीत्यर्थः स राहुः ग्रहणकृत्स्वग एवास्ति ग्रहणे तस्यात्रे स्थित एवास्ति कृत्यक इति प्रकृतिकत्वं विपक्षे प्रत्यक्षबाध

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

वि.वृं. माहसच्चेदितिसराहुः चेद्ग्रहणसंगोनास्तीतर्हि उपप्लवः किंचित्‌ किं चलति उपप्लवो ग्रहणं एतदुक्तं भवति ग्रहणेराहुसान्निध्यमस्त्ये अ.
टी. वेति प्राक्प्रतिपादितं ग्रहणेहि किंचिन्प्रतिमासंसार्धैकभागप्रमाणोतिषण्मासैर्नवभागैः एष्ठतश्चलत्येवनत्‌ एकंग्रहणं यस्मिन्नस्य ७
४२ त्रेदृष्टं तत्परं ——— तत्पृष्ठनक्षत्रेतत्परमपि तत्पृष्ठनक्षत्रेदृति प्रत्यक्षंदृश्यते अतोग्रहणचलनसैवराहुगतिः ग्रहणेचश्यते।
त्संनिध्यात्‌ अतश्चराहोर्गतिसद्भावात्‌ ग्रहत्वंफलदातृत्वंचसिद्धं १५ एवंराहोर्ग्रहत्वादिकंसंस्थाप्यानयैवयुक्त्याकेतोरपिग्र
हत्वंसंस्थापयति द्रुतविलंबितंयदादिवि आकाशेतत्परंतस्यराहोःपरंपश्चिमकायःउदयएतितदाकेतुरपिप्रतिवासरंचरतीति

ग्रहणंकस्मात्‌ एवंसच्चेत्किंचिच्चलतिकिंचिदुपप्लवस्यवतत्‌ १५ उदयमेतियदादिवितत्परंचरति
केतुरपिप्रतिवासरं भवतिनग्रहएवगतिं विनाजगतिकर्मविपाकवदावदः ॥ १६ ॥ ८॥

स्यात्‌ एतदुक्तंभवतिवृत्तपातमपरमित्यादिनाराहोः षड्भांतरेयोद्वितीयःसंपातस्तस्यग्रहःसकेतुरितिप्रतिपादितंतत्संनिधावपियद्ग्र
हणतदपिप्राग्वच्चलति अतः केतोरपिगतिःसिद्धागति सिद्धौसत्यांग्रहत्वंफलदातृत्वंचसाधयति भवतीतिगतिंविनाग्रहएवनभ। राम.
वति कथंभूतःजगतिइहजनेकर्मविपाकवदावदः कर्मणोविपाकस्तंवदतीतिकर्मविपाकवदावदः पचादित्वादच्‌ चरिचलि ४२
पतिवदीनांवादित्वमच्याङ्क्षाभ्यासस्येति द्वित्वमभ्यासस्यात्वंच यस्यहिगतिरस्तिसएवग्रहोभवति अतोसौपूर्वकर्मविपाकजनि
तस्यशुभाशुभस्यसूचकोभवेत्‌ तस्मात्केतोरपिग्रहत्वंफलदातृत्वंचसिद्धं १६ ननुग्रहणेतमएवप्रत्यक्षंदृश्यतेसकथंग्रहोभवे

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

दितिपरमताशंका भोजराजेन दूषितेत्याह इतविलंवितं उपरागे ग्रहणोपरागांतं प्रासेनमउपप्लवोरिष्टमेवेति परिहरंतित्यजंतिसकिं
ग्रहः सग्रहएवनभवतीतितथाहि चंद्रार्कयोर्ग्रहणेस्वाभाविकदीसेरवरोधकंमत्स्यसंयत्नमोहश्यते तदुत्पातएव प्रकृतेरन्यत्व
मुत्पात इत्युक्तत्वात् परिवेषादिवत् अतस्तत्तमउत्पातएवेतिपरिहरंति आचार्या इतियन्मतं तत्तमणित्थवचांसिविवृण्वता
मणित्थवाक्यानांविवरणंकुर्वता भोजमहीभुजा भोजराजेनअनस्तंअस्तिस्मत नस्तूनत्रुकरणे कर्मणिलट् एतन्मतंमणित्थ
वाक्यविवरणेभोजराजेननिराकृतमित्यर्थः न च यथा उत्पातो हि गणितागतत्वेनोपलभ्यते ग्रहणं हि सम्यगुपलभ्यते अतो नोत्पातः

परिहरंस्तुपरागपरागतंतमउपप्लवएवसकिंग्रहः इतिमणित्थवचांसिविवृण्वतामतमनस्तभोजमहीभु
जा १७ अथाप्यसौकेवलवासनायांनायातिसिद्धिंतदपिप्रियंनः अवासनंकिंनसुरघुराजमर्कायनाभ्यांभव

किंचउत्पातोहिदोषविशेषेणयत्रक्वचनदृश्यते चंद्रग्रहणंतुसर्वदेशे अतश्चनोत्पातइतिगणितागतमन्यत्सं ॥ नैवभेजे १८ ॥
आगमश्चब्रह्मणोवरप्रदानादिग्रहचारेतत्फलकथनंचलोकप्रसिद्धिश्च राहुकृतंग्रहणंस्यादागोपालांगनादिसिद्धमिदमितिब्रह्म
गुप्तः अन्यापिपुरस्तादुक्तायुक्तयश्च इत्यादिप्रमाणैस्तन्मतंभोजराजेननिराकृतमितिभावः १७ नन्वागमप्रामाण्येनराहोःसिद्धिर
स्तिपरंतुदिग्देशकालावरणादिभेदैर्गोलवासनायांसिद्धिर्नास्तीतितत्राह उपजातिका अथापियद्यपि असौराहुःकेवलायांस
कस्यामेवगोलवासनायांसिद्धिंनायाति तदपिनोऽस्माकंप्रियं मास्तुगोलवासनायासिद्धिः तत्कथं अर्कायनाभ्यांसूर्यस्योत्तर

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



दक्षिणायनाभ्यासुराणांदेवानांद्युरात्रमहोरात्रं। अवासनंवासनाबाह्यंभवतात्वयैवकिंनभेजेकिंनस्वीकृतं अपितुस्वीकृतमेवद्यु
इत्यव्ययंदिनवाचकमितिक्षीरस्वाम्यादयःएतदुक्तंभवति मेरुगतानांदेवानांनाडिकामंडलेक्षितिजंतस्मादुपरिस्थिताःक्रांति
वृत्तेमेषादयःषड्राशयोदृश्याःतुलादयःषट्अधःस्थिताःअदृश्याःअतोमेषादिषड्राशिस्थितेर्केदेवानांदिनंतुलादिस्थिते
रात्रिरितिद्युरात्रेगोलवासनास्ति शिशिरपूर्वमृतुत्रयमुत्तरंह्ययनमाहुरहश्चतदापरमित्यादिनापुराणादिषुउत्तरायणं
दिनंदक्षिणायनंरात्रिरित्यागमस्यविरोधभयाद्दिवासनावाह्यमपिद्युरात्रंत्वयापिस्वीकृतमतोस्माभिरप्येकमिदं अ

सिद्धांतपक्षस्तुपरंदिनार्धान्निशानिशार्धंत्वपरतोदिनश्रीः एवंपुराणेगणितेचसाम्यमर्कायनाभ्यांस
दसत्फलेषु १९ कर्कंगतेर्केहिसुरायराह्नःफलंपुरारात्रिवदाह्नस्य १९ वासनमागतभयात्स्वीकृतमितिभावः

॥१८ अथानयोर्विरोधंपरिहरति उपजातिका सिद्धांतपक्षस्त्वयंसिद्धांतस्यायमाशयइति दिनार्धात्परंनिशानिशार्धात्परतोदिन
श्रीर्दिनलक्ष्मीर्दिनमेवेतियावत् एवंसत्यर्कायनाभ्यांसकाशात्सदसत्फलेषुविषये पुराणेगणितेचसाम्यस्यात् एतदुक्तंभवति
गणितेकिलकर्कसंक्रमेदिनार्धतत्परंरात्र्युन्मुखत्वाद्रात्रिरित्युच्यते एवंमकरसंक्रमंनिशार्धंतत्परंदिनोन्मुखत्वाद्दिनमेवेतितन
याचसिद्धांतेविरोधपरिहारःदिनंसुराणामयनंयदुत्तरंनिशेतरत्स्याद्धितिकैःप्रकीर्तितं दिनोन्मुखेर्केदिनमेवतन्मतंनिशात
यातत्फलकीर्तनंयतदिति १९ अथैतदेवस्पष्टयति उपजातिका व्याख्यातप्रायमेतत् हियस्मात्कारणात्कर्कंगते अर्के





CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

सतिसुराणांदेवानां अपराह्णः स्यात् अन्हः अपरं अपराह्णः दिनोत्तरार्द्धं अस्यफलपुनः फलंतुरात्रिवदाह ः नक्रंमकरंगते अर्के
सति एषां देवानां अपररात्रस्संनिशान्तेः अपरं अपररात्रः अह ःसर्वैकदेशत्यच रात्रान्हाः पुंसीति पुंस्त्व एतत्परं एतस्मात्परं वास
रवत्स्मरंति संहिताकारादयः अस्यदृष्टीकरणार्थं एतदृष्टांतमन्यत्राप्याह २० उपजानिकाकिलेत्यहंतर्के अनघ्रहेतोः दशमीष्व
पिमाकपूर्वकांपालिको वेधविधिरुक्तः निशार्धाद्दिनार्धपर्यंतं प्राक्कपाले दिनार्धान्निशार्धपर्यंतं पश्चिमकपालंग्रहगणिते प्रसिद्ध
तयोः कपालयोर्भवः कापालिकः अयंभावः दशमीशेषसंयुक्तोयदिस्यादरुणोदयः वैष्णवेस्त्र नकर्तव्यंतद्दिनैकादशीव्रतमित्यादि

नक्रगेतेचापररात्रमेषामेतत्परं वासरवत्स्मरंति २० अनघ्रकैश्विद्दशमीष्वपिमाक्कापालिकोवे
धविधिः किलोक्तः मासोन्यएवन्नियमव्रतादौपित्र्येनिशार्धेसतिपूर्णिमास्या २१ ॥ ७ ॥

वाक्यैररुणोदयेदशम्याविद्धैकादशीयथावैष्णवैस्त्यज्यते तद्वत्कैश्चिन्निर्वादित्यसंप्रदायिभिरर्धरात्रेदशम्याविद्धैकादशीत्य
ज्यते अर्धरात्रादुपरि उत्तरदिनप्राप्तेः तद्वाक्यच अर्द्धरात्रेपिकेषांचिद्दशमीवेधइष्यते अत्र धर्मशास्त्रेपित्याशौचोर्तवा
दिषुकेचिदर्धरात्रादुपर्युत्तरदिनमिच्छंति अनघ्रविष्टिरंगारकश्चैवव्यतीपातश्चवैधृतिः प्रत्यरिर्जन्मनक्षत्रंमध्यान्हा
त्परतः शुभमित्यादिवाक्यानामेवकाशः अपिचमासोन्यइति एवमनेनैवहेतुनापौर्णमास्यापित्र्येनिशार्धेसतिनिय
मव्रतादावन्योमासः स्यात् पितृणामिदं पितुर्यत् नियमाः चातुर्मास्येशाकदध्यादित्यागादयः व्रतानिकार्तिकव्रतादौ।

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰रं॰ नितेपामारंभः पूर्वमासस्य पूर्णमासीमारभ्यैव यतस्तत्र पितॄणां निशार्धं तथाहि चंद्रस्योर्ध्वभागेवसंतः पितरः स्वमस्तकोपरि द अ॰ ७
टी॰ र्शे सूर्यं पश्यंति अतस्तत्र दिनार्धं एवं पूर्णमास्यां सूर्यस्य अधोर्ध्वे स्थितत्वादर्धरात्रः कृष्णपक्षार्धे सूर्योदयः शुक्लपक्षार्धे तस्मय।
४३ इति पित्र्यमानस्य वासनायां सिद्धांते प्रसिद्ध २१ अथ राहुसद्भावे प्रमाणांतरमाह द्रुतविलंबितं तत्तस्मादितिहेतोः स राहुर्विधुंतुद एव
परैरन्यैर्हेतुभिः किं अन्यैर्हेतवस्तिष्ठंतु तमेव हेतुमाह रुधिरेति रुधिरबिंदुवपुर्यथा तथा येतामसकीलककेतवो विलसंति तेस्व
पितृराहुसमर्थनहेतवः स्युः रुधिरस्य बिंदवो यस्मिन् तत् रुधिरबिंदु तच्च तद्वपुश्च तत्तथा वपुः शरीरं तामसकीलकाश्च ते केतवश्च

तदितिविधुंतुद एव स किं परैः रुधिरबिंदुवपुर्विलसंति ये तदनुतामसकीलककेतवः स्वपितृराहुसमर्थनहेतवः २२
यः पर्वगस्तस्य गतिर्न दृष्टा सैव ग्रहत्वेपि महत्प्रमाणे विलोमगामी विधुपात एव तस्माद्ग्रहो राहुरितिप्रतीतः २३

तेन तथा स्वश्चासौ पिता च स्वपिता तस्य समर्थनं संस्थापनं तत्र हेतवस्ते तथा तामसकीलकाख्याये केतवस्ते राहुसुता इत्युक्तत्वात्तेषां
केतूनां पिता राहुरस्तीत्यर्थः तथा चोक्तं वराहसंहितायां सुतजानलानुरूपाः त्रिमूर्त्तताराः कुजात्मजाः षष्टिः नाम्ना च कौंकुमास्ते राम॰
सौम्याशासंस्थिताः पापाः त्रिंशत्त्र्यधिका राहोस्ते तामसकीलका इति ख्याताः रविशशिगा दृश्यंते तेषां फलमर्कवच्चोक्तमिति। ४३
॥२२॥ राहोर्ग्रहत्वं प्रागुक्तप्रमाणेन भंग्यंतरेण दृढयति उपजातिका यः पर्वगो ग्रहणगो राहुस्तस्य गतिः साक्षान्न दृष्टा किं
त्वनुमानेन ग्रहणक्षणग एवेत्यादिना अतो गतिरस्तीत्यनुमानसिद्धं सैव गतिर्ग्रहत्वे महत्प्रमाणं हि यस्मात्कारणाद्वविधुपा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

तोराहुर्विलोमगामीसदावक्रचारीअस्तियथा चंद्रार्कौसदानुलोमगामिनौ तथैवायंसदाविलोमगामीति तथाचभूपालः राहुकेतू
सदावक्रौशीघ्रगौशशिभास्करावितिं तस्माद्ग्रहोराहुरितिप्रतीतः प्रत्ययप्राप्तः स्वतन्त्राकार्यग्रंथकृतोनभवतीतिप्रतिभाति प्रतिदिनं
खचरइत्यादिनापौनरुक्त्यापत्तिः तदितिविद्यतइत्यनेनाध्यायसमाप्तिप्रतीतेश्च २३ इतिश्रीसकलागमाचार्यवर्यश्रीकेशवसांव
त्सरात्मजगणेशदैवज्ञविरचितायांविवाहवृंदावनटीकायांविवाहदीपिकायांराहुसंज्ञाध्यायः सप्तमः ७ अथषड्वर्गादिफला
नि विवक्षुस्तावत्तत्वादिभावानयनं जातकशास्त्रीयमप्यत्रसौकर्यार्थमाह नवशालिनीवृत्तानि लग्नादर्कचंद्रौत्रिखंडंकृ

इतिश्रीविवाहवृंदावनेराहुसंज्ञाऽध्यायः सप्तमः ७ अथषड्वर्गाध्यायः कृत्वालग्नादर्कचंद्रान्त्रिखंडंभू
योव्यस्तैस्तद्वद्दीभिर्विलग्नं चक्रार्धोनेनेचतत्कालएवंजाये यात्तामस्तमध्यान्हलग्ने १ ॥ ६ ॥

त्वातस्यघटीभिर्भूयः पुनर्व्यस्तैर्लग्नंकार्यं तद्यथा लग्नमेवसूर्यंप्रकल्प्य अयनांशान्दत्वातस्माच्चरं कृत्वारात्रिदलंकार्यं
तमिष्टकालंप्रकल्प्यतस्मात्सायनांशलग्नात् लंकोदयैर्भोग्यादिकंकृत्वालग्नंकार्यमिति अर्थात्चतुर्थंलग्नंस्यात् तेहिलग्नेच
क्रार्धोनेषड्भान्यूनेकार्येएवंतेतत्काले अस्तमध्यान्हलग्नेक्रमेणजाययात्ताउत्पन्नेभवेतां १ लग्नंतुर्याच्चतुर्थलग्नाच्छोध्यं
तुर्यमस्तात्सप्तमलग्नाच्छोध्यं अस्तमध्याद्दशमलग्नाच्छोध्यंमध्यमेंद्रीविलग्नाच्छोध्यं इंद्रस्येयमैंद्रीपूर्वादिक् तत्रवि
लग्नंतदेवलग्नमित्युच्यते तस्मान्मध्यंशोध्यं शेषाणांचतुर्णामपिपृथक् पृथक्त्र्यंशान् आद्येषुलग्नादिषुद्विद्विवारंदद्यात्

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

वि॰ दृ॰ टी॰ ५५ एवममुनाप्रकारेण भावाः स्युः तद्यथा लग्नं चतुर्थाद्विशोध्य तस्य त्र्यंशं लग्ने दत्त्वा द्वितीयभावो भवेत् पुनरपि तमेव त्र्यंशं द्विती अ॰ ८
यभावे दत्त्वा तृतीयभावो भवेत् एवं तुर्यं सप्तमाद्विशोध्य तत्त्र्यंशेन तुर्ये द्विर्दत्त्वा पंचमषष्ठौ भावौ स्तः एवमष्टमनवमा
दयः एतयोः दलैक्यं संधिः स्यात् तद्यथा द्वादशभावलग्नयोरैक्यदलं तन्मध्यवर्ती संधिः स्यात् एवं लग्नद्वितीययोर्द्वितीयतृती
ययोरित्यादि २ अथ ग्रहफलानां भावकल्पनवशात्तारतम्यमाह संधौ स्थितो ग्रहो निःफलः शुभफलोऽन्यः शुभफलोऽपि भा
वभागैस्तुल्यखेटः सम्यक्परिपूर्णां भावपंक्तिं भावफलं व्यनक्ति प्रकटयति इदानीमिति यावत् संधेः सकाशादूनाधिक्यमाप्तः

लग्नं तुर्यात्तुर्यं सप्तमाद्विशोध्यं मध्यादस्तं मध्यमेंद्रीविलग्नात् शेषत्र्यंशान् द्विर्द्विराद्येषु दद्यादेवं भावाः संधिरे
तद्दलैक्यं २ संधौ खेटो निःफलो भावभागैस्तुल्यः सम्यक् भावपंक्तिं व्यनक्ति संधेरूनाधिक्यमाप्तो गतैष्यव्याधी-
नां संदधाति स्वपाकं ३ नांगीकारो भावजानां गुणानां तद्दोषाणां नत्वतस्त्याग एव ॥ प्राप्तखेटगतैष्यभावाधीनां स्व

पाकं संदधाति संधेरूनो ग्रहो गतभावजं फलं अधिकस्त्वेष्यभावजं फलं ददातीत्यर्थः तत्पदं पादो धर्मिमिति त्रैराशिकेन कल्प्यम् ए
मनेन विधिना यत्र भावे स्थितो ग्रहस्तत्फलं भावजं लग्नराशेः सकाशाद्यावतिराशौ स्थितो ग्रहस्तत्फलं स्वाभाविकं ३ अनयोर्वि राम॰ ५५
भेदसंगतिनिर्णयमाह भावेन भावकल्पनायां ये जाता गुणास्तेषां गुणानामंगीकारः न स्वीकारस्तस्माद्भावकल्पनवशाद्ये दोषास्तेषां
दोषाणां नत्वतः साकल्येन त्याग एव अत्र प्रथमस्योदाहरणं भावेति स्वाभाविके लग्नात्सप्तमः सप्तमस्थितः सूर्यो भावव्यक्तौ स॥

Digitized by Sarayu Trust Foundation Delhi and eGangotri.
CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

त्यांभावकल्पनया अष्टमंगतोपित्याज्यएव सप्तसप्तयोश्चाः यस्यासौतथाएतदुक्तंभवतिसूर्यः किलसप्तमोदुष्टः अशुभः
शुभःस्वाभाविकेनसप्तमःसूर्यः यदिभाववशादष्टमोभवेत्तदासोशुभोपित्याज्यएव ४ अथसयुक्तिकंद्वितीयोदाहरणमाह ।
यस्मात्कारणाद्दोषःपाक्षिकोपिमन्यारव्येयस्त्या गुणस्तुयःसम्यग्व्यापीसोनुगम्यः अनुसरणीयः सम्यग्व्याप्नोतीति सम्यग्व्या ज्यः
पीसर्वसंमतःपक्षांतरगतोपिदोषस्त्याज्योगुणस्तुसर्वसंमतएवग्राह्यइत्यर्थः तस्मात्कारणात्पंचमोपिभार्गवः अंशेभोगेगेह
भावाङ्गृहभावभागेभ्यः अधिकःसन्भूत्यैशुभायनस्यात् अयंभावः पंचमःशुक्रः किलशुभःषष्ठोशुभःभावादुभयतोये संधीन

भावव्यक्तावष्टमत्वंगतोपित्याज्योलग्नात्सप्तमःसप्तसप्तिः ४ मन्यारव्येयःपाक्षिकोपीहदोषःसम्यग्व्या
पीयोगुणःसोनुगम्यःयस्मादंशेगेह भावाधिकःसन्नतस्याद्भूत्यैभार्गवःपंचमोपि ५ ॥ ७ ॥ ॥ ॥

दंतवर्त्तिनोंशास्तेतद्भावस्य अतः पूर्वसंधेःसकाशादंशैरधिकोयदुत्तरभावस्थितोभवेत् अतःस्वाभाविकेनपंचमःशुक्रोय।
दिभाववशेनषष्ठोभवेत्तथापित्याज्यएवेति अथलग्नानद्दृटिकाज्ञानंविवक्षुस्तदर्थंतावत्संक्रांतिज्ञानमात्रेणसूर्यज्ञानंलग्नं।
शज्ञानंचाह ५ अंतर्मध्येवासराःअंतर्मध्येवासराःसंक्रांत्योरंतर्वा रास्तेतथा तैर्युतंदादिनगणाद्यज्ञादिराश्यादिलब्धंत
त् मेषादिराशिभिर्मिश्रयुक्तभानुःस्यात् तद्यथा संक्रांतिमारभ्यइष्टदिनपर्यंतं योगतो दिनगणःसपूर्वसंक्रांति मार।
भ्यउत्तरसंक्रांतिपर्यंतेयेमध्यवर्त्तिनोदिवसास्तेभुक्तः तस्माद्राश्यादियल्लब्धंतत्संक्रांतिवशेन गतराशिभिर्युक्तंरा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



वि.रं. श्यादिको भानुःस्यात् अथलग्नांशज्ञानं भक्ताद्गुनिलग्नस्यभुक्तायेनवांशास्तैर्दिग्भिर्निघ्नारामैर्भक्तास्त्रिंशदंशाभागाभवेयुः तद्यथा अ°
टी. यथोक्तविधिनालग्नशुद्धिंनवांशशुद्धिंचविचार्य अजमृगाननतौलीत्यादिवक्ष्यमाणोक्तयालग्नादिममंशमारभ्ययद्दष्टनवांशात्पूर्वं ८
४५ नवांशाभुक्तास्तेदशघ्नास्त्रिभक्तास्तल्लग्नराश्याद्योभागाःस्युरितिराश्यादिलग्नंस्यात् ६ अथाभ्यांकालमाह रात्रौभानुर्भार्धयुक्
षड्राशियुक्तः दिवातुयथास्थितएवसायनांशः अयनांशसहितौवारात्रौच अर्थाल्लग्नंचसायनांशंकार्यं तन्वर्कांशाःक्रमेणभुक्त
भोग्याःपृथक्स्वोदयघ्नाःत्रिंशद्भक्ताःपलादिस्यात् अर्थात्भुक्तंभोग्यंचतद्यथातनोर्लग्नस्यभुक्तभागालग्नोदयेनगुणिताःत्रिंशद्

संक्रांत्यंनवांसैरैर्यंगुदंदाद्यंभानुर्भादिमेषादिमिश्रं भक्तारामैर्लग्नभुक्तानवांशादिग्भिर्निघ्नास्त्रिंशदं
शाभवेयुः ६ रात्रौभानुर्भार्धयुक्सायनांशस्तन्वर्कांशाःस्वोदयघ्नाःपृथक्ते त्रिंशद्भक्ताभुक्तभोग्याःपलादि
तादृक्कालोमध्यगःस्वोदयाढ्यः ७ तत्कालार्कन्यूनलग्नांशपिंडोभक्तःपंचसोपिभिर्मुक्तहोराः ॥ ८ ॥

क्ताःफलादिभुक्तंस्यात् एवमर्कस्यभोग्यभागाःअर्कोदयेनगुणितास्त्रिंशद्भक्ताःपलादिकंभोग्यंस्यादितितादृक्कालःस्वोदयाढ्योम राम.
ध्यगःस्यात्तदिवदृश्यतेसौतादृक् सचासौकालश्चतादृक्कालःपलादिभुक्तभोग्यकालःस्वोदयैर्मध्यवर्तिभिरुदयैराढ्यःम ४५
ध्यगःलग्नार्कयोर्मध्यवर्तीकालःस्यात् ७ अथलग्नकालमुत्क्वालग्नात्कालहोरामाह सचासौकालश्चतत्कालःतत्कालेर्कः
तेनन्यूनंतच्चतल्लग्नंचतस्यअंशाःतेषांपिंडःसमूहःपंचसोपिभिःपंचदशभिर्युक्तःमुक्तहोराःस्युःतदीशाःतासांहोराणामी

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

शाभास्वदाद्योवारमारभ्यसंख्यायेरन्गणयेरन् कर्मणिलिङ्. भास्वान्सूर्यः शुक्रः प्रसिद्धः ज्ञोबुधः इंदुश्चंद्रः शौरः शनिः आर्योगु
रुः भौमः प्रसिद्धः ॰ अथपापहोराभंगमाह सौम्यग्रहहोराशुभापापहोराशुभेतिस्पष्टमर्थसिद्धंच सौम्यवर्गैः अधिकंतस्मिन्सौम्य
वर्गाधिकेलग्नेसतिक्रूराः पापहोरामोघानिःफलाः स्युः गृहादीन्षड्वर्गान्वक्ष्यति तत्रचतुरधिकाः सौम्यवर्गाश्चेत्स्युस्तदासौम्यवर्गाधि
कमितिस्पष्टं किंचवारेराश्यांचक्रूराहोरामोघाः स्युः सौम्यवारेसदारात्रौक्रूरवारेसत्यपीत्यर्थः तथाचगर्गः क्रूरवारेक्रूरहोरान
शस्ताइहमंगले नातिदुष्टाशुभेवारेरात्रौस्वल्पफलामतेति वैद्यनाथः तेलग्नंसच्चतुर्वर्गंदृष्ट्यतेकालहोरयेतिसनत्सरसंगेन

भास्वच्छुक्रज्ञेंदुसौरार्यभौमाः संख्यायेरन्वारतस्तेनदीशाः ॰ होराः क्रूराः सौम्यवर्गाधिकेस्युर्लग्नेमोघाः
सौम्यवारेचरात्र्यां पापारिष्टं निःफलं शक्तिभाजां स्यात्षड्वर्गैर्लग्नगैः सद्ग्रहाणां ९ ॥ ६ ॥

अन्यस्यपापजनितस्याशुभफलस्यभंगमाह पापारिष्टमिति पापारिष्टंपापग्रहजनितमरिष्टं अशुभंनिःफलंस्यात् कस्मिन्सति
शक्तिभाजांबलिनांसद्ग्रहाणांसौम्यग्रहाणांषड्वर्गैर्लग्नगेसति ९ एवंकालहोराणांमतांतरमुक्त्वा सर्वसंमतंवक्ष्यन् तदर्थंतावद्वा
रप्रवृत्तिमाह उपजातिका चरार्धदेशांतरंचग्रहगणितेप्रसिद्धं तत्रचरार्धमेवचरमुच्यते देशांतरयोजनानिस्वचतुर्थांशोमि
तानितत्पलानिस्युः तेषांचरार्धपलानांदेशांतरपलानांचक्रमेणयुग्वियोगोकार्यो कस्मिन्सति याम्योत्तरगोलगेऽर्केसतिया
म्यगोलेयोगः उत्तरगोलगोवियोगइत्यर्थः तत्रयोगेसतितैःपलैर्दिनवारकर्तुः प्रवृत्तिरव्युदयात्पुरापूर्वंस्यात् वियोगेसतिप

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰ वृ॰ ष्वाङ्गवेन अतो दक्षिणगोले सदा पूर्वं वारप्रवृत्तिं उत्तरगोले पश्चादिति दिनस्य दिवसस्य वारस्य कर्त्ता वारस्वेति यावत् इय अ॰
टी॰ मुक्ता वारप्रवृत्तिरसंगता वासनावाह्यत्वात् सप्तर्षिवाराहादिवचनविरोधाच्च तथाहि लंकायां सूर्योदयात्सर्वदेशे किल वार ८
४६ प्रवृत्तिः लंकायां यत् क्षितिजं तदन्यदेशे उन्मण्डलं उत्तरगोले स्वक्षितिजादूर्ध्वमुन्मंडलं दक्षिणे त्वधः तदंतरं चरमेव अत उत्त
रगोले मध्यरेखायां सूर्योदयादुपरि चरपलैर्वारप्रवृत्तिः दक्षिणे तु पूर्वं मध्यरेखास्वदेशयोरंतरे देशांतरपलमितैः पलैः रेखा
याः पश्चिमदेशे ऊर्ध्वमुदयः पूर्वदेशे त्वधः अतोनेन विधिना चरदेशांतरयोः संस्कारवशादूर्ध्वमधो वा वारप्रवृत्तिरिति अतए

चरार्धदेशांतरयुग्वियोगो क्रमेण याम्योत्तरगोलगेर्के योगे पुरा रव्युदयाद्वियोगे पश्चात्प्रवृत्तिर्दिनवारकर्त्तुः १०

वोक्तं सिद्धांते अर्कोदयादूर्ध्वमधश्चेत्यादि तथा च संहितायां सप्तर्षिभिश्च उत्तरदक्षिणचरदलहीनयुता नाडिका रवेरुदयात् प्राक्पश्चा
न्तरदेशांतरयोजनस्वाप्तांशकेनापीत्यादि अन्यैश्च सौम्यगोले सवितुरुदयादित्यादि अत उक्तमनेनन तत्कालवासनो विरुद्धं सप्तर्
षिप्रमुखवचनैर्विरुद्धं अथ वक्तव्यमस्य पाठांतरमस्तीति चेतन्न यतः सर्वत्राप्ययमेव पाठः अथ च वक्तव्यमस्यार्थान्तरमस्ती राम॰
ति चेत्तदपि न उक्तानार्थत्वे सत्यर्थान्तरसंभवात् अर्थान्तरं भविष्यति चेद्विचार्यतां नास्त्येवार्थान्तरं अथ वक्तव्यमसौ मध्य ४६
रेखायाः पश्चिमदेशनिवासी भविष्यति अतस्तेन स्वदेशाभिप्रायेणेदमुक्तमिति तदपि न उत्तरगोले देशांतरपलेभ्यो ही
ने चरे सति व्यभिचारात् तथाहि तदावयोः संस्कारे क्रियमाणे पश्चिमदेशांतरस्याविशेषत्वात्तत्तुल्यैः पलैः पूर्वमेव वारप्र

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



नृत्निर्भाव्या असौनुवदति वियोगेपश्चादिति अतः कुत्रापि नालंबनेसतीदंवक्तव्यं अनेनपश्चिमदेशनिवासित्वात्स्वदेशा
भिप्रायेणोद्भुक्तं यन्त्रूनेरगोले अल्पचरे सतिव्यभिचरयतेतत्कदाचित्कत्वात्तेनोपेक्षितमितिमंतव्यं १० अथहोरानयन
इंद्रवज्रा वारप्रवेशाद्वारप्रवेश मारभ्यद्विघ्नाश्चना इष्टनाड्यश्चताभ्यः शरैः पंचभि यल्लब्धंतेनतुल्याः कालहो
राः स्युः अपिसतांतरघोतनेप्रागुक्तहोराः स्युरेता अपिभवंतीत्यर्थः तासुहोरासुसंख्यागणनाउक्तवत्स्यात् भास्कु
कज्ञेत्यादिना अनयोर्मतयोः फलितमाह यदीतियद्युभाभ्यांप्रकाराभ्यांक्रूरा होराभवेत् कुवर्गः पापवर्गोधिकंच

द्विघ्नेष्टनाडीशरलब्धतुल्या वारप्रदेशादपिकालहोराः संख्योक्तवतास्वथयद्युभाभ्यांक्रूराकुवर्ग
श्चतदातिदोषः ११ गंडांतेष्वपिवैधृतावुभयतः संक्रांतियामद्वयेयामार्धंव्यतिपातविष्टिकुलि
((केर्भंगंनविलग्नंजगुः ॥

तदातिदोषोमहादोषोभवेत् तदातल्लग्नंसर्वथात्याज्यमेवेत्यर्थः ११ अथैतत्प्रसंगेना
न्यांश्चमहादोषानाह शार्दूलविक्रीडितं गंडांतानित्रिविधानि मूलवैधृतवरीयसामित्यादिनावक्ष्यमाणानि वैधृतः स
सविशोयोगः संक्रांतेः सकाशाद्यामद्वयेउभयतः संक्रांतिकालात्प्राक्पश्चाच्चषोडशघटिकास्वित्यर्थः यामार्धं अर्धया
मः सतुशास्त्रांतरोक्तः मनीषिणोर्धप्रहरंग्रहित्रितीयादित्यादिना व्यतिपातः सप्तदशोयोगः विष्टिर्भद्रासतमंकरणंकुलि
कोनंतरमेवोक्तः एतैर्गंडांतादिदोषैर्भंगं नविलग्नंजगुर्मुनयः एष्वन्यतमेदोषेसतिलग्नभंगः स्यादित्यर्थः अत्रकुलिक

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

माहद्विघ्नाइति द्वाभ्यां द्वाभ्यामूनाद्विघ्नाः मनवश्चतुर्दशाश्चार्कतः सूर्यमारभ्य कुलिकिनो मुहूर्ता भवंति कुलिको स्तियेषां ते कुलिकिनः रवौ चतुर्दशो मुहूर्तः कुलिकश्चंद्रे द्वादशो भौमे दशम इत्यादि निष्कृत्य काः रवौ त्रयोदशश्चंद्रे एकादश इत्यादि। दिनस्य रात्रेर्वा पंचदशांशो मुहूर्तः प्रसिद्धः अथैतत्प्रसंगेनान्येषां वारादिदोषाणां विषयमाह त्याज्या इति ये मया नोक्ता दोषाः तेभ्यः परे ये तिथ्युडुवारजा दोषाः खशादीन्विनानत्याज्याः आदिशब्देन हूणवंगानां ग्रहणं तिथिश्च उडुश्च वारश्च तेभ्यो। जातास्तेन तथा नत्र तिथिजा दग्धतिथ्यादयः नक्षत्रजा उपग्रहादयः वारजाः कंटककालवेलोदयः ते खशादिष्वेव वर्जनीया ना

द्विघ्ना मनवोर्कतः कुलिकिनो व्येका मुहूर्ता निशि त्याज्याः सन्ति तिथ्युडुवारजाश्च न परे दोषाः खशादीन्विना।
१२। राश्यंशाः शशिभूगुणेक्षणहता स्तिथ्यभ्रभूदिक्शरैर्भक्ता भार्धदृकाणनंददिनकृद्भागा गृहं
यस्य यत्

स्यन्नेत्यतो त्र नोक्ता इति ये त्वत्रोक्तास्ते सर्वदेशे त्याज्या इत्यर्थः उक्तं च तिथ्युडुदिनपतिजाता योगा ग्राह्यास्तु हूणखशवं गइत्यादि यद्वा तिथिश्च उडु च तिथ्युडु इति तिथ्युडु च वारश्च तिथ्युडुवाराः तेभ्यो जातास्तेन तथा तिथिवारजा नक्षत्रवारजाश्चेत्यर्थः उक्तं च श्रीपतिना विरुद्धयोगास्तिथिवारजाता इत्यादि तिथिवारजाः संवर्तकादयः उडुवारजाः मृत्युयोगकालदंडादयः तत्रोक्ते मृत्यु। योगं सर्वदेशे त्यजेत् तद्वाक्यं च सर्वदा सर्वदेशेषु मृत्युयोगं विवर्जयेदिति १२ अथ लग्ने षड्वर्गशुद्धिमाह शार्दूलविक्रीडितेन राश्यं: अंशाः राश्यंशाः राशिभुक्तांशाः राशीस्त्यज्य अंशा ग्राह्या इत्यर्थः ते चतुर्षु स्थानेषु क्रमेण शशिभूगुणेक्षणहताः १।१।३।

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

ईस्रुणो द्वौ शेषास्त्वष्टाः तिथ्यभ्रभूदिक्शरैर्भक्ताः १५।१०।१०।५॥ अभ्रभुवो दृशशेषाः प्रसिद्धाः लब्धानि भाधरादयो वर्गाः सुः
भार्धं होरा दृक्काणो द्रेष्काणः नंदा दिनकृद्भागो नवांशः द्वादशांशो एवं चत्वारो वर्गाः यस्य गृहं तस्य गृहं तत्तस्यैव अयमेको गृहा
स्त्व्यः अथ त्रिंशांशाः समराशौ सितादीनां पंचादयस्त्रिंशांशाः त्रिंशतः पूरणास्त्रिंशाः शादंत विंशतेश्चेति डप्रत्ययः त्रिंशांश्चते
अंशाश्च त्रिंशांशाः तद्यथा समराशावाद्याः पंचभागाः शुक्रस्य ततः सप्त बुधस्य ततोऽष्टौ गुरोः ततः पंच शनेः ततः पंच भौमस्येति ओ
जर्क्षेषु विषमराशिषु व्युत्क्रमात् भागानामधिपतीनां च तद्यथा आद्याः पंच भौमस्येति ओजर्क्षेषु विषमराशिषु व्युत्क्रमात्

त्रिंशांशाः सितसौम्यजीवरविजक्ष्माजन्मनां व्युत्क्रमादोजर्क्षेषु शराश्वसंयमरुतः पंचेति षाड्वर्गिका १३॥
कुजकवींदुजचंद्ररवींदुजाः सितकुजेज्ययमार्कजसूरयः भवनपालवपाश्च तदादयस्त्वजमृगाननतौलि((कुलीरकाः १४

भागानामधिपतीनां च तद्यथा आद्याः पंच भौमस्य ततः पंच शनेः ततोऽष्टौ गुरोः ततः सप्त बुधस्य ततः पंच शु
क्रस्येति अत्र सितादीनामेवोत्क्रम इति न व्याख्येयं गर्गादिवचनविरोधात् इतीयं षड्वर्गिका स्यात् षण्णां वर्गाणां समाहारः
षड्वर्गी सैव षड्वर्गिका १३ अथ सौम्यपापवर्गज्ञानाय राश्यधिपानाह द्रुतविलंबितं कुजादयो भवनपा राश्यधिपाः सुः मेषादी
नां द्वादशराशीनां कुजादयो द्वादश क्रमेणाधिपाः सुरित्यर्थः स्वगृहाधीशाः अथ नवांशस्य स्वेनेत्यवपा नवांशपतयश्च सुः
नवांशराशेरप्यधिपाः सुरित्यर्थः तमेव नवांशराशिमाह तदादय इति तस्य नवांशस्यादयः प्रथमाः अजमृगाननतौलि

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

 कुलीरकाः स्युः मेषराशौ प्रथमनवांशो मेषस्ततो वृषे मकरः मिथुने तौली कर्के कर्कट एव एवं पुनः सिंहे मेषः कन्यायां मकर इ 
त्यादि एवं प्रथमनवांशज्ञानात्तमारभ्यप्रागानीतभुक्तनवांशान्गणयित्वा वर्तमानो नवांशराशिः स्यात् तदधिपो नवां
शाधिपतिरिति १४ अथहोरादीनाह वसंततिलका समे समराशौ अब्जखगयोर्होरे स्तः अब्जश्चंद्रः खगः सूर्यः खगः पूषा
गभस्तिमानित्यभिधानात् विषमराशौ क्रमेण होरे रवींद्वोः आगानीतलब्धवशात्समेराशौ प्रथमा होराचंद्रस्य द्वितीया सूर्यस्य
विषमे प्रथमा सूर्यस्य द्वितीयेंदोरित्यर्थः अथ द्रेक्काणाधीशाः द्रेक्काणकाइति स्वगृहात्प्रथमपंचनवेश्वराणां द्रेक्काणाः स्युः

होरे समेऽब्जखगयोर्विषमे रवींद्वोर्द्रेक्काणकाः प्रथमपंचनवेश्वराणां स्युर्द्वादशांशपतयः स्वगृहा
च्छुभानि भानि ग्रहाश्च निजमित्रशुभांशभाजः १५ भजेत भुक्त्यं नरभुक्तियोगैः ॥ ॥

तद्यथा यदा शून्यं लब्धं तदा प्रथमो वर्तमानः यदा एकं तदा द्वितीय इत्यादि अनेन विधिना प्रथमो द्रेक्काणो राश्याधिपस्यैव ।
द्वितीयस्तस्माद्राशेः पंचमाधिपस्य तृतीयो नवमराश्यधिपस्येति अथ द्वादशांशाः स्वगृहात् द्वादशांशपतयः स्युः स्वीयलब्धव 
शात् द्रेक्काणवत् त्रिंशांशानां स्वामिन एवोक्ताः एवं षड्वर्गाधीशा उक्ताः अथैषां शुभत्वमाह शुभानीति शुभानां सौम्यग्रहाणां 
भानि राशयः शुभानि स्युः यद्वर्गस्य राशेरधिपः शुभः स वर्गः शुभः स्यादित्यर्थः न केवलं राशिः किंतु ग्रहाश्च निजमित्रशुभांश
जः शुभः निजश्च मित्रं च शुभश्च तेषामंशो नवांशः तं भजंतीति तथा स्वसुहृच्छुभानां नवांशस्थिता इत्यर्थः वर्गराशेरप्यधि

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

पः एवंविधस्तदैव वर्गः शुभइतिभावः १५ अथतिथ्यादीनांसंधिकालमाह उपजातिका षष्टिघ्नान्गुणाग्नीन् पृथक्पृथक् भुक्त्यंतरभुक्तियोगैः भजेत्क्रमेणतिथीभयोगांतरनाड्यः स्युः भुक्त्यंतरं च भुक्तिश्च भुक्तियोगश्चतेनतथा चंद्रार्कयोर्भुक्त्यंतरभुक्तिश्चंद्रस्यैवयोगश्चंद्रार्कभुक्तियोगः तद्यथात्रयस्त्रिंशान्षष्ट्यासंगुण्यत्रिधासंस्थाप्यक्रमेणचंद्रार्कभुक्त्यंतरेणचंद्रभुक्त्याचंद्रार्कभुक्तियोगेनचविभज्यतिथिनक्षत्रयोगानांसंधिनाड्यः स्युरित्यर्थः तिथिशब्दस्य स्त्रीलिंगेपिसत्वात्कृदिकारात् ङीषिकृतेतिथीतिसिद्धं उक्तं च सिद्धांते प्राशितनुविकलाभ्यइति एता एवमध्यगत्या आनीयव स्पष्टतिनक्षत्रयोगेत्यादिना चंद्रार्कयोः संक्र।

पृथक्पृथक्षष्टिगुणान्गुणाग्नीन् तिथीभयोगांतरनाड्यइंदोः पुण्यारवेः पुण्यतमास्त्विमास्युः १६
कुजादिकानामपिबिंबलिप्ताः खषड्गुणाः स्वस्वजवेनभाज्याः १७

मणकालमाह इंदोरितिइमास्त्वनेनैवप्रकारेणसाधिता अंतरनाड्यः इंदोः पुण्याः रवेस्तुपुण्यतमाः स्युः एतदुक्तं भवति रवेश्चंद्रस्यापिबिंबत्रयस्त्रिंशत्कलाः अतोनयैवरीत्यात्रयस्त्रिंशान्षष्ट्या संगुण्यस्वस्वगत्याविभज्य अंतरकालः स्यात् सचंद्रस्यपुण्यः रवेस्त्वतिशयितपुण्यः अयंकालोनक्षत्रयोराश्योर्वा अंतराले भवेत् संक्रमेणकाल इत्यर्थः १६ अथभौमादीनामपिसंक्रमणकालमाह उपजातिका कुजादिकानांभौमादीनामपिप्रागुक्ताबिंबलिप्ताः खषड्गुणाः स्वस्वजवेनस्वस्वगत्याभाज्याः संक्रमणांतरालकालोनाड्यादिकोभवेत् अत्रबिंबनिमध्यान्येवोक्तानितेभ्यः कृतोयंसंक्रमणकालः सोपिमध्योभवेत् तत्स्फुटभुक्तिबिंबैः स्फुटः स्यात् तेषांभौमादीनांग्रहगणितोक्तयास्फुटभुक्तिभिः स्फुटबिं

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰वृ॰ वैश्वस्फुटकालः स्यात् एवं संधिकालादीनामर्धेन दंतादुभयत्रेत्यर्थः सिद्धं १७ अथर्क्षत्वादिसंधीन्विवक्षुः र्क्षत्वानयनं तावदा मू॰
टी॰ ह उपजातिका एकगृहाधिकस्यैकराशियुक्तस्य सायनांशस्य अयनांशसहितस्य रवेर्यद्दशघ्नं दंभा मससमूहो भवेत् तद्रा
४९ शिद्वयभागैः षष्टिभिस्तष्टं भक्तं यल्लब्धं तेन वसंताद्यृतवो भवंति मृगादिराशिद्वयभोगादित्युक्त्या मीनादौ वसं
तारंभः अत उक्तं एकगृहाधिकस्येति यावद्भिरंशैरयनच्युतिः स्यादित्युक्त्वा तु सायनस्येत्युक्तं एवं केचिदृत्वयनादीनि सा
यनार्कादिच्छंति तदभिप्रायेणेदमुक्तं केचित्तु केवलादेव उभयादपि केचित् कालनिर्णयकारादयः १८ अथर्क्षत्वादीनां संधि

नाड्यादिकः संक्रमणांतरालं कालः स्फुटस्तत्स्फुटभुक्तिविंबैः १७ रवेर्भवेदेकगृहाधिकस्य यद्दशघ्नं
दं खलु सायनस्य यदत्र राशिद्वयभागतष्टं लब्धं वसंताद्यृतवो भवंति १८ तत्संध्ययोगांगघटीसमाः
स्युर्हि संगुणाश्चेद्विषुवायनीयाः ससंधिसंधिः खलु यत्र शेषः शून्यं भवेदेषविशेषपुण्यः॥ १९ ॥

कालमाह तेषामृतूनां संधयः अंगांगघटीसमाः षट्षष्टिघटिकातुल्याः स्युः तदंतास्त्रयस्त्रिंशद्घटिकाः पूर्वं पश्चाच्चेत्यर्थः चे राम॰
द्विषुवायनीयास्तर्हि द्विसंगुणाः द्वात्रिंशदधिकशतघटिका इत्यर्थः विषुवं च अयनं च विषुवायने तयोरिमा विषुवायनीयाः वि ४९
षुवं मेषतुलासंक्रमौ अयनं कर्कटमकरसंक्रमौ तत्पूर्वं पश्चाच्च षष्टिघटिका इत्यर्थः यत्र काले शेषं शून्यं भवेत् राशिद्वयभाग
तष्टमिति क्रियमाणे यदा शून्यं शेषं भवेत् एकस्यानोन्यस्यादित्यर्थः ससंधिसंधिर्भवेत् संधेरपि संधिः संधिसंधिः एषका

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

लोविशेषपुण्यः अतिशयितपुण्यः अत्रसंधिसंधिः पुण्योविशेषग्रहणात्संधिकालेसाधारणपुण्यमस्तीतिसूचितं १९ अथयो[illegible]
फलमाह उपजातिका संधौतिथिनक्षत्रादिसंधिकालेपुरंध्रीस्त्रीशोकंएतिप्राप्नोति यदिसंधिसंधिस्तदापुरंध्रीवंध्यामृतप्रजावाभवे
त् अथैतत्प्रसंगेनमध्यरात्रसंधिकालयोः फलमाह वदंतीति निशीथमध्यंदिनसंधिषुऊढांविवाहितांऋतुनाविमूढां आर्तवर
हितांवात्स्यामुनयोवदंति वत्सस्यापत्यानिवात्स्याः निशीथोर्द्धरात्रःमध्यंदिनस्येतिमध्यंदिनंतेषांसंधयःतत्परिमाणमुक्तंग्रंथांत
रे मूर्तेःकालोनिवसतिमहानिशायांचदिनदलेयस्मात् दशपूर्वंदशपरंतत्तस्माद्वर्ज्यानिचपलानीति २० अथमूलादियो

संधौपुरंध्रीशुचमेतिवंध्यामृतप्रजावायदिसंधिसंधिः वदंतिवात्स्याऋतुनाविमूढांनिशीथमध्यंदि
नसंधिमूढां २० मूलवैधृतवरीयसांचयमंचमेषुचतिथिष्ववांतरे रेवतींद्रफणिभोद्भवंतदप्यागताद्द्वि
गुणमुत्सृजेत्सुधीः २१
गसंधीनांविशेषमाह रथोद्धतं मूलस्यवैधृतस्यवरीयांसश्च एषांयोगानांयत्प्रागागतंअवांतरं
यच्चयंचमेषुतिथिषुपंचमीदशमीपंचदशीषुयच्चरेवतींद्रफणिभोद्भवंरेवतीज्येष्ठाश्लेषोद्भवंतदपिआगतादेवांतराद्द्विगुणंसु
धीःउत्सृजेत्त्यजेत् एतेषांमत्तादेतत्तुल्यंपूर्वःपश्चाच्चेत्यर्थःएतद्गंडांतसंज्ञं २१ अथतिथ्यादीनांसंधिव्यवहारार्थमेध्या
गत्यानीयपठति वसंततिलका नक्षत्रयोगतिथीनांसंधिषुएकानाडिकाक्रमेणतिथ्यष्टविंशतिपलैःसहिताउभयत्रपू
र्वंपश्चाच्चत्याज्या एकानाडिकापंचदशपलैःसहिताउभयत्रपूर्वंपश्चाच्चत्याज्याएकानाडिकापंचदशपलैःसहिता

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



नक्षत्रसंधिः अष्टपलैः सहितायोगसंधिः विंशतिपलैः सहितानितिथिसंधिरित्यर्थः लग्नसंधिमाह कर्कालीति कर्कालिमी
नतनूनांकर्कवृश्चिकमीनलग्नानांसंधिषुदिक्पलानिदशपलानि उभयत्रत्याज्यानि एषांअंतात्पूर्वंपश्चाच्चेतिशेषाणां
वृषादिलग्नानांविवरेषुसंधिषुपंचपंचपलानि उभयत्रत्याज्यानि एषसंधिरंशानामपिज्ञेयःलग्नोपलक्षणात् २२ अथा
माससंधिमाह उपजातिका अमावास्यातिथिःपार्श्वयोस्तिथिद्वयेनसमंसहसार्द्धंसाकंसमंसहेत्यमरः चतुर्दशीप्रतिपत्सहि
तेत्यर्थः मांगल्येनउपादधातिनधारयति अत्रहेतुमाहलोकमितियस्मात्कारणात्तत्रतस्मिन्तिथित्रयेलोकंपृणश्चंद्रमाः

नक्षत्रयोगतिथिसंधिषुनाडिकैकातिथ्यष्टविंशतिपलैःसहितोभयत्र कर्कालिमीनतनुसंधिषुदिक्प
लानित्याज्यानिशेषविवरेष्वपिपंचपंच २२ अमातिथिःपार्श्वतिथिद्वयेनसमंनमांगल्यमुपादधा
तिलोकंपृणस्तत्रतिथेःप्रणेतायस्मान्नपीयूषवपुर्वपुष्मान् २३॥ लोकपृणानि असौलोकंपृणःपालनपू
रणयोः कर्त्तरिशःखित्वात्नांलोकस्यपूरणोइतिमुम् तिथेःप्रणेताप्रवर्तकः पीयूषवपुरमृतशरीरःवपुष्मान् प्रशस्तंवपुर्य
स्यासौवपुष्मान्नास्ति चतुर्दश्यादिषुकृष्णपक्षेसर्वविधस्यचंद्रस्य अस्तंगतत्वादित्यर्थः चंद्रोह्यमृतकिरणोलोकाप्याय ॥ राम॰
कस्तिथिप्रवर्त्तकइति अन्येश्चंद्रबाल्यत्वात्द्वितीयानिषिद्धा २३ तन्मतंनिषेधयन्किंचिद्विशेषमाह उपजातिका ॥ ५०
अयंचंद्रमाप्रतिपत्समासौप्रतिपदंतेउदेतिचसामीप्येसप्तमी प्रतिपदंतेतत्समीपेइत्यर्थः इक्कर्मादिसं

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

सउदितश्चंद्रः कृशोपिवर्धिष्णुतयाहेतुनाप्रशस्तः वर्धनशीलोवर्धिष्णुः तस्यभावस्तत्तायाआशिषुर्वर्धमानतयाप्रशस्
तेतदुक्तंद्वीपीत्यर्थः अतोस्यवालत्वदोषोनास्तीतिसूचितं तस्यापिविशेषणमाह द्वीपेति द्विर्गताआपोयस्मिन् तद्वी
पं तस्मादन्यद्वीपंद्वीपांतरंतत्रतिष्ठतीति द्वीपांतरस्थः देशांतरदृष्टइत्यर्थः देशांतरदृष्टश्चंद्रस्तावद्विफलः तावल्ल
क्ष्यं यावन्नपृथ्वीनयनाध्वनीनोनास्ति पृथ्वीशब्देनतत्रस्थाजनालक्ष्यंते तेषांनयनानिपृथ्वीनयनानि तेषामध्वामार्ग
स्तस्मिन्नलंगच्छतीति पृथ्वीनयनाध्वनीनः अध्वनोयत्खाविन्यलंगाम्यर्थेखः आत्माध्वानौखेइतिअतः प्रकृतित्वय

उदेतिचायंप्रतिपत्समाप्तौकृशोपिवर्धिष्णुतयाप्रशस्तः द्वीपांतरस्थोविफलोपितावद्यावन्नपृथ्वी
नयनाध्वनीनः २४ नोजन्ममासतिथिभेषुनचाधिकोनेमासेतिथौचपृथुमंगलमामनंतियज्ज्ये
ष्ठगर्भजमपत्यमुपेनमेतज्ज्येष्ठमहोत्सवमवश्यमियान्नवृद्धिम २५॥१९ द्वापृथ्वीनयनाध्वनिर्द्दिनसम
र्थः पृथ्वीनयनमार्गेसमर्थइति एतदुक्तं भवतिशास्त्रेणादृष्टश्चंद्रोदेशांतरदृष्टइदंलंकापुरेर्कस्योदयः स्यात्तदादिना
र्धंयमकोटिपुर्यामित्यादिगोलवासनयाप्रसिद्धं अतः स्वदेशभूमिस्थितैर्यावन्नदृष्टस्तावद्विफलइत्यर्थः अत्रा
दिनातु स्वदर्शनेनदोषइतिप्रसिद्धमेव २४ अथजन्ममासादीनांनिषेधमाह वसंततिलका जन्मनिमासतिथिभा
नितेषुजन्ममासिजन्मतिथौजन्मनक्षत्रेवेतिपृथुमंगलंचौलोपनयनविवाहादिकंनो आमनंतिनकथयंति नचअ

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



धिकोनेमासे अधिमासेक्षयमासेचेति अधिकोनेति योचदिनवृद्धौदिनक्षयेचेति ज्येष्ठमासस्यविशेषमाह यज्ज्येष्ठेति यज्ज्येष्ठगर्भज मपत्यंपुत्रःकन्यावातज्ज्येष्ठेमासेमहोत्सवंचौलोपनयनविवाहादिकंउपेतंप्राप्तंसन्नदवश्यंवृद्धिंनदूयातनमाप्नुयात्तज्ज्येष्ठापत्यस्यज्ये ष्ठमासे मंगलंशुभमन्नेत्यर्थः २५ अथैषांगुणदोषाणांविवेककर्तुःप्रशंसामाहरथोद्धतं इतियदुक्तंगुणागुणमयंगुणाश्च अगुणा श्चगुणागुणाःतैःप्रचुरंगुणागुणमयंअतीन्द्रीयदृशोदिव्यदृष्टयोमुनीश्वराःनिरूचिरेनिजगदुः विदितजन्मतन्मनःलग्नलग्न धीःदैवविद्कीर्तिभाग्भवति तद्वतन्मनं अस्यतच्छब्दस्यपूर्वेणयच्छब्देनान्वयः जन्मचतन्मनंचजन्मतन्मनेयेनासौतथा स

इत्यतीन्द्रियदृशो निरूचिरे यद्गुणागुणमयं मुनीश्वराः दैवविद्विदितजन्मतन्मनः कीर्तिभाग्भवति ल
ग्नलग्नधीः २६ इति विवाहवृंदावने लग्नषड्वर्गाध्यायो ऽष्टमः ८ ॥ अथ गोधूलिकाध्यायः प्राचीं कु
ङ्कुमचर्चितामिव दिशं मुक्ताफलस्रग्विणीं कौसुंभांशुकभासिनीमिव दिशं प्राचेतसीं दर्शयन् ॥ ९ ॥

वंविधगुणदोषविचारचतुरोलग्ननिर्णयैकबुद्धिः कीर्तिमानभवतीत्यर्थः २६ इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मज गणेशदैवज्ञविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां लग्नषड्वर्गादिशुद्ध्यधिकारोऽष्टमोऽध्यायः ८ सर्वंसर्वलग्ना नांशुद्धिमभिधायेदानींगोधूलिकलग्नविशेषशुद्धिरारभ्यते तत्रतावत्तस्यकालंदर्शयन्स्वकविनाकौशलंदर्शयति शार्दूलविक्री डितं तावत्ययंतमंगलमसुरभीरेणोः कुमार्याःकरंपाणिंगृह्णतः स्वीकर्तुःपुरुषस्यमंगलंभवतिसुरभीणांधेनूनांरेणुः धूलिः



CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

सुरभीरेणुः अंगेषुलग्नाः संसक्ताः सुरभीरेणवो यस्याः सा तया धेनुधूलिधूसरयाइत्यर्थः तावत्कं यथा यावद्रविः सूर्यः संध्याकुरंगी
दृशा सह करग्रहं याति कुरंग्या इव दृग्यस्याः सा तया मृगलोचना संध्यैव कुरंगी दृक् संध्याकुरंगीदृक् तया अत्र संध्या सायंसंध्यैव तत्र
सुरभीरेणूनां संभवात् किं कुर्वन्सन् कुंकुमचर्चितामिव प्राचीं दिशं प्रति आत्मानं दर्शयन् इवेत्युत्प्रेक्षा यां कुंकुमेन चर्चितां मंडितां तां दृशे रंगी
जनत्वाह्निकमेकत्वं सायंकाले प्राच्यां कुंकुमसदृशः स्वाभाविकः संध्यारागः स कुंकुममिवेत्युत्प्रेक्षा कथंभूतां प्राचीं मुक्ताफलस्र
ग्विणीं मुक्ताफलानां स्रक् मुक्ताफलहारः सोऽस्ति यस्याः सा मुक्ताफलस्रग्विणी तां मत्वर्थीयो विनिः अर्थान्नक्षत्रमालेव मुक्ताफल
स्रक् तामिव दर्शयन् प्राचेतसीं दिशमिव प्रचेतसो वरुणस्येयं प्राचेतसी तां प्रतीचीं इव यथार्थे यथा प्राचीं तथा प्राचेतसीमि

यावद्याति करग्रहं सह रविः संध्याकुरंगीदृशा तावन्मंगलमंगलग्नसुरभीरेणोः करं गृह्णन् : १ उत्करा
तर्णक विलोकनवत्सुवत्सात्पीनस्तनोद्दुघितदुर्धर धेनुधूलिः ॥ ११ ति तेन प्राचीं दिशं प्राचेतसीं च दिशं न दर्शयन्ति
नि भावः कथंभूतां प्राचेतसीं कौसुंभांशुकभासिनीं कुसुंभ्याः पुष्पाणि कुसुंभानि तैरक्तं कौसुंभं तच्च तदंशुकं च तेन भासते सा तया अर्था
त्संध्यारागएव कौसुंभांशुकमिति यद्वा कौसुंभांशुकमिव भासते सा तया यावत्सायं संध्याकाले सता दृशः संध्यारागः सुरभीरेणाव
श्च दृश्यते तावत्काले करग्रहकर्तुं मंगलं स्यादिति तात्पर्यार्थः १ अथ गोधूलिकप्रशंसां तदधिकारिणश्चाह वसंततिलका पंच
श्लोकाः उद्धूलीकरोतीयेषां ते उत्कराः तेच ते तर्णकाश्च तर्णकावत्साः तेषां विलोकनं तेन वल्गा वः शोभमानाः वल्गनि ताव त्सान्यः

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

 वल्लानंगतिविशेषः पीनामांसलास्तनायासांता पीनस्तनाः उदुत्कर्षेणाहृषिताः संतुष्टा उद्धृषिताः हर्षेर्निष्ठायांवेड्वात्वंदुःखेनध 
र्तुं शक्यंतेताः दुर्धराः उत्कर्णात्कर्णकं विलोकनेनयत्सावश्यतावत्सान्यः पीनस्तना उद्धृषिताः दुर्धराश्यताधेनवश्वतासोधूलय
स्तास्तथानाः कर्मगोधूलिकंलग्नकर्तुगोप पृथग्जनानांसृजत्युत्पादयति ददातीत्यर्थः गवांधूलयस्तत्रभवंतदूपलक्षितंका।
लेजातं लग्नंतद्गोधूलिकंगोपाः पशुपालकाः पृथग्जनाहीनवर्णाः गोपादीनांगोधूलिकलग्नंसर्वविधधेन वोभवंतीतिभा
वः अस्यप्राशस्त्यमाह दोषैरितिकथंभूतलग्नं अन्यैर्महद्भिर्दोषैः अनूनंसहितमपि अयंभावः गोधूलिकलग्नेसदासत्

गोधूलिकंसृजतिगोपपृथग्जनानांदोषैर्महद्भिरपिलग्नमनूनमन्यैः२ गोधूलिकेपिविधुमष्टमष
ष्ठमूर्तियत्नोत्त्यजंतितदयंस्वरुचिप्रपंचः॥९९ मः सूर्यो स्त्येव अयंमहादोषः मदनमूर्तिशायइत्युक्तत्वात् सतदन्यै
र्महादोषैरष्टमभौमादिभिः सहितमपिलग्नंशुभंभवेदिति यद्येवंतर्हिकेचित्षष्ठाष्टमचंद्रेसतिलग्नस्यभंगमाहुस्तन्निरस्य
ति २॥ गोधूलिकेपि अष्टमषष्ठमूर्तिविधुंयत्केचिन्मोच्चयंतित्याजयंति नत्तस्मात्कारणादयंस्वरुचिप्रपंचः अष्टमंचषष्ठं 
च अष्टमषष्ठेतयोर्मूर्तिर्देहोयस्यासौतथा अष्टमषष्ठस्थितइत्यर्थः तद्वाक्यंचजामित्रंनविचिंतयेद्वहयुतमित्यादि हित्वा 
चंद्रमसंषडष्टमगतंगोधूलिकंशस्यते इतिअयंस्वरुचेःस्वस्याभिरुचेः प्रपंचोविस्तारः यद्वास्वरुच्याकृत्वाप्रपंचोव्या
मोहनंजनानांतस्मात्कुतः यस्मादिदंगोधूलिकंविवाहधिष्ण्यैः सहपंचांगशुद्धिमयमेव पंचांगशुद्धाप्रधानंपंचांग।

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

शुद्धिमयंगोधूलिके विवाहनक्षत्रेषुसत्सुपंचांगशुद्धिरेवमुख्या ननन्वन्यत् लग्नशुद्ध्यादिकमिति पंचांगादीनितिथ्यादीनिप्रसि
द्धानि तेषांशुद्धिः स्वाभाविकदोषविरहः यथारोहिण्यादिषुविवाहेहितत्वात् नहिं विवाहधिष्ण्येष्वितियोनरुक्तं ननक्षत्रस्यप्राधा
न्यात् उक्तधिष्ण्यमधिकृत्यपंचांगशुद्धिर्विलोक्येत्यर्थः एतदग्रेप्रपंचयिष्यामः एतत्कथयस्मात्कारणादिदंगोधूलिकंसततंनि
त्यं अस्तगतेससमगतेपतंगेसूर्येसतिभवेत् एतादृशेमहादोषेगृहीतेसति किंत्वन्येषष्ठाष्टमचंद्रादयइतिभावः अनेनैवअष्टम
भौमादयोपिनिराकृताः किंच ३ इहास्मिन् गोधूलिकेअंशोनवांशः स्वभर्त्रा स्वस्वामिनादृष्टयुतोनास्तुलग्नंचस्वभर्त्रादृष्टयुतमास्तु

पंचांगशुद्धिमयमेवविवाहधिष्ण्येर्यस्मादिदंसततमस्तगतेपतंगे ३ नांशोनलग्नमिह दृष्टयुतंस्वभर्त्रा ॥
नार्कारसौरतमसामपिसंगमंगः किंचंद्रचारभयमेकमिहास्तुकिं चिन्नात्रप्रमाणवचनंकिमपिश्रुतं ४

अर्कारसौरतमसांसूर्यभौमशनिराहूणांसंयोगस्तेनभंगोलग्नभंगः सोपिनास्तु एवंसत्येकंचंद्रचारभयंकिमस्तु चंद्रस्यचारस्तस्मा
द्भयंहित्वाचंद्रमसंषष्ठाष्टमगतमितिएतदेकंकथमस्त्विति अपितुतदपिनास्तु नन्वत्रागमएवप्रमाणमितिचेत्तत्राह किंचे
तिकिंचअन्यच्च अत्रास्मिन् चंद्रचारविषयेबोधुष्माकंप्रमाणवचनंकिमपिनश्रुतं अस्मिन्विषयेयद्वाक्यंप्रमाणीकर्तव्यं
तादृशंमहर्षिसंमतंवाक्यंनास्तीतिभावः ४ नह्यत्र किंविलोक्यमिति आहतद्गोधूलिकंशनौशनिवारेसार्केकार्यंदृश्येरवौ
सतीतिचित्रशिखंडिनः सूनौगुरुवारेविरविकार्यंविगतोरविर्यस्मिन् तद्विरवि अस्तंगतेर्केसतीति कस्मात्कुलिकयाम

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

वि॰ नृं॰ दलोपलंभात् कुलिकस्य यामदलं च तयोरुपलंभः प्राप्तिः शनौ हि रात्रौ प्रथममुहूर्ते कुलिकः अतः सार्के गुरौ तु अष्टमयामार्धं अ॰
टी॰ अतो विरवीति केवलमिदमेव पंचांगमध्ये वारदोषसद्भावात् नत्वन्यदिति सूचितं किं तत्राह प्रायेणेति संकरेण जातिसंकरेण भ ९
५३ वंतीति संकरभुवः तेषां हीनवर्णानां करपीडनं प्रायेण बाहुल्येन अशुभर्क्षपक्षक्रूरक्षणेष्वशुभकृत्स्यात् ऋक्षं च पक्षश्च ऋ
क्षपक्षौ अशुभौ च तौ ऋक्षपक्षौ च तौ तथा क्रूरश्चासौ क्षणश्च स तथा अशुभर्क्षपक्षौ च क्रूरक्षणश्च तेन तथा एतदुपलक्षणा
द्दुष्टवारयोगादिष्वपि एष्वपि विहीनवर्णानां पाणिपीडनं शुभं किं पुनः पंचांगशुद्धाविति भावः तथा च शौनकः अंत्या
नामशुभर्क्षे इत्यादि ५ यदुक्तं सार्के इत्यादि तत्परिमाणमाह अत्रास्मिन्नुग्गो धूलिके यस्मात्कारणादुभयत्र अर्धास्त

सार्के शनौ विरवि चित्रशिखंडिसूनौ तत्केवलं कुलिकयामदलोपलंभात् प्रायेण संकरभुवामशुभर्क्षप

मयात्प्राक्पश्चाच्च घटिकादलमिष्टमाहुः तत्तस्मात्कारणात् दंवरमणेः ९ सक्रूरक्षणेष्वशुभकृत्करपीडनं स्यात् ५
सूर्यस्य अर्धबिंबोपि कालो न ग्राह्यः अर्धे बिंबकाले यस्मिन्स तथा तर्हि तद्वाचकवाक्यानां अर्धोदिते अर्धास्तमिते सूर्यबिंबे द्वा
घंगतं इत्यादीनां गतिमाह कालार्गलेति इयं तपनार्धबिंबवेलाव्यवस्थितिः कालार्गला नियतये मुनिभिः रचया बभूवे अ राम॰
रचि राजंनाद्वचनैः कमीणिलिटिभुवो तु प्रयोगः तपनस्य अर्धबिंबं तस्य वेलाकालः तस्य व्यवस्थितिः अवस्थानं काल ५३
स्य अर्गला तस्या नियतिर्नियमः इयमर्धबिंबात्मिका वेलाव्यवस्थितिः कालमध्यनियमाय रचिता किंतु तत्पूर्वं न ।

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

स्पष्टत्वाच्च कालांतरमस्ति अर्धघटिकात्मवाक्यांतरदर्शनादितिभावः तथाचाहुः दिनांतेसूर्यविंबार्धपूर्वपश्चाद्घटीदलं कालार्गलेचवे
लायांधात्रोद्वाहायनिर्मितेति अत्रगोधूलिकेपिविधुमष्टमषष्ठेत्यादियदुक्तंग्रंथकृतातत्सम्यग्विचारपदवींनाधिरोहति तथाहियदु
क्तोत्रहेतुःपंचांगशुद्धिमयमेवविवाधिष्ण्येरित्यादिना तत्रपृच्छतेकेयंपंचांगशुद्धिरितिपंचांगानितिथ्यादीनिप्रसिद्धानि नारदव
सिष्ठादिभिः पंचांगशुद्धिरहितेदोषस्त्वाद्यः इत्यादिनामहादोषप्रकरणेभिहितानि तेषांशुद्धिर्दोषविरहः दोषोद्विधैवप्राकृतिकआ
गंतुकश्चेति यस्मिन्कर्मणियदभिहितंनतिथ्यादिकंतस्मिन्प्राकृतिकोदोषः यथाविवाहेदर्शव्यतिपातभरण्यादौ आगंतुकोग्र
हाधिजनितः यथातिथौदग्धत्वं नक्षत्रेपापवेधादिकमिति अतः पंचांगानांप्रकृतिकदोषएवात्रशुद्धिःनत्वागंतुकदोषविर

अत्रोभयत्रघटिकादलमिष्टमाहुर्ग्राह्यस्तदंवरमणोरपिनार्धविंवः ॥

हः तस्ययोगकरणयोरनभिधानात् अपिचशुद्धिशब्देनआगंतुकदोषविरहेउच्यमानेवारदोषःखार्जूरिकसमांघ्रिभमित्या
दिनारदादिपठितेषुदोषेषुयोनरुत्तरापतिःएकविंशतिपरिगणनाया असंभवश्चतस्मात्पंचांगानांप्राकृतिकदोषविरहएव
शुद्धिरितिस्थितं अतएवंविधायांपंचांगशुद्धिस्तन्मयमेवगोधूलिकंइत्युक्तंभवति उतयदीदृशंब्रूषे पंचांगशुद्धिमयमेवविवा
ह धिष्ण्यैरितिवदतोयमाशयः विवाहविहितनक्षत्रेसतिपंचांगानांग्रहादिजनितदोषाभावलक्षणाशुद्धिर्विवक्षिता तद
पिनयोगकरणयोस्तस्यासंभवात् यथासंभवमितिचेत्तदपिन पंचपदस्यवैयर्थ्यात् अतः शुद्धिशब्देनप्राकृतिकदोषाभावः।

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰ वृं॰ स्त्री कर्त्तव्यस्तर्हि पंचांगशुद्धिवासरैः सार्कं शनाविन्यादिना कुलिकार्धयामौ कथंत्यज्येते वारदोषादिति चेत्तत्र नारदवसिष्ठा । अ॰
टी॰ दिभिः पंचांगशुद्धिविरहइत्यादि पठितदोषेषु वारदोषस्य पृथग्ग्रहणात् तर्हि कुलिकं क्रान्तिसाम्यं चेत्यागमबलात् कुलिका ९
पृ ५४ र्धयामौ त्यज्येते यद्येवं षष्ठाष्टमचंद्रे पापाः किमपराद्धं सोप्यागमबलात्त्यज्यते नात्र प्रमाणवचनं किमपि श्रुतमपि चेत्तदपि न य
त आगमप्रमाणवाक्यानि संत्येव षष्ठेष्टमे मूर्तिगते च चंद्रे गोधूलिके मृत्युमुपैति कन्या कुजेष्टमे मूर्तिगतेथवास्तेवरस्य नाशं ।
भवंतिगर्गः धिष्ण्यं क्रूरयुतं त्याज्यं मूर्तौ षष्ठाष्टमे चंद्रं कुजं रंध्रास्तलग्नगं विनारंध्रं शुभैर्युक्तं गोधूलं शुभदं भवेदित्यादीनि एता
न्येव बहुसंमतानीति चेन्न तदपि न मन्त्यार्व्येयः पाक्षिकोपीह दोषइत्युक्तत्वात् किमुत बहूक्तेः अतः षष्ठाष्टमचंद्रादयो गोधूलिके ।

कालार्गलानियतयेनपनाधैर्विंम वेलाव्यवस्थितिरियं रचयांबभूव ६ इति विवाहवृंदावने गोधूलिका
ध्यायो नवमः ९ ॥

उक्तदोषास्तेपि त्याज्या इति सिद्धं ६ इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशदैव
ज्ञविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां गोधूलिकाध्यायो नवमः ९ अथ विवाहे मासगोचरविचाराध्यायो व्या
ख्यायते तत्रादौ सौरचान्द्रमासयोर्विचारमाह मंदाक्रांतया यस्मात्कारणाच्चैत्रमासि शुक्लप्रतिपदि तिथौ नववर्षे सति सर्वैर्गगन राम॰
गतिभिः रव्यादिग्रहैः मेषादौ स्थितैर्भूर्भुवः स्वः प्रवृत्तिः आसीत् भूर्भुवः स्वरित्यव्ययानि क्रमेण लोकत्रयवाचकानि तथा ५४
चोक्तं भूर्लोकाख्योदक्षिणोव्यक्षदेशात्तस्मात्सौम्योयंभुवः स्वश्च मेरुः इति अतः पृथिव्यासनलोकत्रयाधिष्ठितास्सर्वेलोका

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

नांप्रवृत्तिः प्रथमनिर्माणं सृष्ट्वाभवत्कं कमलोद्भवेनेतिलंकानगर्यामुदयाच्चभानोरितिचयदुक्तं तत्पौषमासेमृगमुख
गतेमकरादिस्थितेभास्वतिभास्करेनासीत् तस्मात्कारणान्यविरोधायविधोरिंदुमासश्चांद्रमासः श्रेयान्श्रेष्ठउक्तः अयं
भावः लंकायांक्षितिजगतयोर्मेषादिस्थितिचंद्रार्कयोः किललोकत्रयस्ययुगपत्प्रवृत्तिः तत्रचंद्रार्कयोः समकालत्वाच्चांद्रम
सादिःसएवमेषगतार्कत्वात्सएवचैत्रमासः तदानीमादित्यस्यैवहोरा अतोर्कवारः इत्यादिसर्वंपौषमकरादिस्थितेर्कनघ
टतेयतःसौरवर्षमासादेःप्रवृत्तिःसंहिताकारैर्मकरादेरेवस्वीकृता उक्तंचमृगादिराशिद्वयभानुभोगादिति अतश्चांद्रएवमु

अथमासगोचरविचाराध्यायः चैत्रेमासिप्रतिपदिदितिपौवासरेर्कस्यसर्वैर्मेषादिस्थैर्गगनगतिभिर्भूर्भु
वःस्वःप्रवृत्तिः एवंपौषमृगमुखगतेभास्वतिस्यान्नचासाधुक्तः श्रेयान्यविरोधायविधोर्विदुर्मासोस्तितस्मा ॥८॥

ख्यइतिग्रंथकारोक्तिः नैतच्चतुरस्रं प्रवृत्तिकालेमेषादिगतार्कत्वात्सौरमासस्यापिप्रवृत्तेःसाफल्यकीर्तनायैव वास्तवंतुमेषा
देरेवग्रहगणितेप्रसिद्धा तथाचोक्तं दिनंसुराणामयनंयदुत्तरमित्यादि किंच प्रवृत्तिकालेचांद्रदिनवर्षादेरपिप्रवृत्तेस्तस्यापि
मुख्यत्वंकथयन्नवक्तव्यंतस्मादनयायुक्त्याचांद्रमासस्यश्रेष्ठत्वंवक्तुमनुचितं किंतुयुक्त्यंतरसंहितागमबलात् तदुच्यतेतनस्त्रे
णायुक्तःकालःसास्मिन्पौर्णमासीतिसंज्ञायामितिचपाणिनेरनुशासनात्पौषीत्यादिसंज्ञासौरादौनोपपद्यते तस्माच्चांद्रमास
एवमुख्य इतिअतएवाहनारदोपि यस्मिन्मासेपौर्णमासीयेनधिष्ण्येनसंयुता तन्नक्षत्राह्वयोमासःपौर्णमासीतदाह्वया

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰ वृं॰ तस्यसौ शुक्लकृष्णाख्यौ देवपित्र्यौ च तावुभाविति अभिधानं च पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभाविति अतएवसि अ॰
टी॰ द्धांतेप्युक्तं मासास्त थाचतिथयस्तुहिनांशुमानात् इति अतः सौरादौ मासप्रयोगो गौणवृत्त्या योजनीय इत्यस्माकं सिद्धांतः १०
५५ तर्हि रवेर्वैसाखराशुन्तरायणमिति विवाहे सौरमासाः कथमुक्ताः नाषाढप्रभृति चतुष्टये विवाह इत्यनेन चांद्रमासाग्रंथांत
रे उक्ताः १ अनयोर्विरोधे सति सयुक्तिकं निर्णयं वक्तुं पूर्वपक्षमाह मंदाक्रांता सुंदरीणामुपयामे विवाहे मृगयुजि मकर
गते रवौ पौषो नेष्टः मकरगतार्कस्य शुभत्वेपि अशुभपौषयोगात्स नेष्ट इति भावः ननु विपरीतं कुतो न स्यादित्यत्राह आह

नेष्टः पौषो मृगयुजि रवावाहृतश्चेत्तु वीणैश्चारुश्चैत्रोप्यजसहचरे भास्करे सुंदरीणां मांडव्याद्यैः
स्मृतशुभफलस्यास्य किं नोपयामे मीनोपि स्यादविकृतफलः फाल्गुनस्य प्रसंगात् २ ॥ ॥

तदिति प्रवीणैः पंडितंमन्यैः मृगयुजि रवौ पौषश्चेदाहृतः स्वीकृतः मकरार्कस्य शुभत्वात् तदा चैत्रोपि अजसहचरे मेषग
ते भास्करे सति चारुः शुभं स्यात् नचैवमस्ति किंच अस्य प्रसिद्धस्य फाल्गुनस्य मांडव्याद्यैः स्मृतशुभफलस्य प्रसंगात् योगा
त् मीनो मीनगतार्कोपि अविकृतफलः किं न स्यात् अपितु अविकृतफल एव न विकृतं फलं यस्यासौ तथा यथावत्फ राम॰
लएवेत्यर्थः शुभस्यापि फाल्गुनस्य योगात् दुष्टोपि मीनो दुष्टफल एवेति भावः न चाप्येवमस्ति एवं सौरप्राधान्यं स्वीकर्तु ५५
रनिष्टद्वयं २ एवं सति सिद्धांतमाह उपजातिका यदि फाल्गुनेज्ञ्यो मीनगतार्कस्तदा न निंद्यः चांद्रस्य मुख्यत्वात् एत

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

त्यसंगेनचतवं धेपिनिर्णयमाहमेषइति मेषोमेषगतार्कस्तुयदिवैशाखगतस्तदाननिंद्यः मेषेर्केचत्रनंनहीत्युत्तरे शुभस्यापिमेषस्यशुभवैशाखयोगाच्छुभत्वमितिभावः प्रकृतमाह मध्वाश्रितेति मध्वाश्रितौ चैत्रमासगतौ द्वौमीनमेषगतार्कावपिवर्जनीयौ चैत्रस्यदुष्टत्वात् मीनस्तुस्वरूपतएवाशुभः मेषस्तु चैत्रयोगादिति चांद्रस्यमुख्यत्वादितिसर्वत्रहेतुः इत्यादिवाचांद्रत्यादिवक्षिणांयुक्तिरियमेव इत्यादिकमुक्तवतांयुक्तिरियमुक्तैवेत्यर्थः ३ यदिहिचांद्रेमुख्यत्वंतदोष्ठथकसौर मानेकथमुक्तमित्याशंकयाह शालिनीयदिप्रायोवाहुल्येनसौरमानंविवाहेस्वीकृतंतन्तदाफलेनचांद्र

ऋषोननिंद्योयदिफाल्गुनेस्यादजस्तुवैशाखगतोननिंद्यः मध्वाश्रितौ द्वावपिवर्जनीयावित्यादिवाचामियमेवयुक्तिः ३ प्रायः सौरमानमिष्टंविवाहेतत्किंचांद्रेमासमाहुःफलेनयस्मात्सम्यक्तत्फलाप्तिस्तदैक्येसौरोमासः केवलः किंचिदूनः ४॥ ११ मासंकिमाहुःशौनकादयः धनमानपरिभ्रष्टाचैत्रेचात्‌समैथुनात्वसतीत्यादिना यस्मादेतौसौरचांद्रमासौविवाहेउक्तौतस्मात्तदैक्येतयोःसौरचांद्रमासयोरेकत्वेसतिफलाप्तिःसम्यक्‌परिपूर्णास्यात् केवलःसौरमासःचांद्राभेदयाकिंचिदूनः चांद्रस्यमुख्यत्वादित्यर्थः ५ एवंसौरचांद्रयोर्वलावलमुक्त्वागोचराष्टकवर्गयोर्वलावलमाह रथोद्धतानि ३ योषितांस्त्रीणांगुरुपतंगयोःगुरुसूर्ययोर्गोचरेशोभनेसति गोचरविधिनागुरुवलेरविवलेचसतीत्यर्थः करग्रहःशुभकरःस्यात् तदत्यये तस्यगोचरवलस्यात्यये अलाभेस

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



ति अष्टवर्गविधिनागुरुपतंगबले सतिमतांतरमाह सूर्यशुद्धिमिति अपरेनृणांपुरुषाणां सूर्यशुद्धिंजगुः नतुगुरुशुद्धिंगोचर 
विधिनातद्लाभे अष्टवर्गविधिनेतिउक्तंच भाक् भानुरप्युपचयेति पुरुषाणांगुरुशुद्धिस्तुव्रतबंधएव अतोनविवाहे शूद्रा
दीनांतुव्रतबंधाभावाद्विवाहएवगुरुशुद्धिः सूर्यशुद्धिश्चेति ५ ननुचगोचरस्यकथंमुख्यत्वंतत्राह जातकेअष्टकवर्गफल
मेवास्तितन्नयच्चंद्रराशिफलंतदेवगोचरफलं संहितासुपठितं अतोस्यअष्टवर्गफलस्यपरिणयेतिमुख्यताकिंनस्यात्
गोचरफलंह्येकस्माच्चंद्रराशेरेव अष्टवर्गफलंत्वष्टराशिभ्यः अतोस्याधिक्यात् परिणयेपितत्प्राधान्यंकथंनस्यादिति

योषितांगुरुपतंगगोचरे शोभनेशुभकरः करग्रहः अष्टवर्गविधिनातदन्ययेसूर्यशुद्धिमपरेनृणांज
गुः ५ अष्टवर्गफलमेवजातकेनास्यकिंपरिणयेपिमुख्यता सत्यमुद्वहेमजन्मशास्त्रयोरन्यतामुनि
भिरेवसंस्मरे ६ क्रूरमष्टममरिष्टमिष्टदंसप्तमंशुभमुशंतिजन्मनितेनयमुद्वहनरीतिरित्यसावत्रगोच

भाव: स्पष्टार्थः गोचारेणपरिहरंतिसत्यमिति जातकेअष्टवर्गफलंमुख्यमितिमन्यामहेपरि ९ रपथ्योरथोद्धतः ७
णयेपिमुख्यतेतितन्नसहामहेइतिकथंउद्वहनजन्मशास्त्रयोः विवाहशास्त्रजन्मशास्त्रयोरन्यता अन्यत्वंमुनिभिरेवसं 
स्मरेस्मृता विवाहशास्त्रस्यजन्मशास्त्रस्यचभेदोमुनिभिरेवस्मृतइति ६ अत्रोदाहरणमाहजन्मनिजन्मकालेअष्टमं 
क्रूरमरिष्टमशुभमुशंति सप्तमंशुभंशुभग्रहंइष्टंशुभप्रदमुशंतिकांक्षंतिशुभयः ह्ययमुद्वहनरीतिविवाहमार्गेनभवति

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

तथाहि जन्मकाले स्मः क्रूरग्रहोऽशुभः विवाहे शुभः जन्मकाले समः शुभग्रहः शुभः विवाहे त्वशुभः अतोनयोः शा
स्त्रयोरन्यथात्व इतिहेतोरत्र विवाहे गोचरपथो गोचरमार्गः रथोद्धतस्थे रूढतः अतिघृष्टः अस्य मार्गे श्लेषः गोचरमा
र्गः पारंपर्यागतः स्फुट इत्यर्थः रथोद्धतं इतिच्छंदसोपि नाम सूचितं ७ इति श्रीसकलागमाचार्यवर्य श्रीकेशवसांवत्स
रात्मजगणेशदैवज्ञविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां मासगोचरविचाराध्यायो दशमः १०
अथ प्रातिस्विकं भावफलमुक्त्वा योगजमाह शालिनी चक्रस्य प्राचि अर्द्धे पश्चादर्द्धे क्रमेण क्रूराक्रूरैः कृत्वा चक्रमि

इति विवाहवृंदावने मासगोचरविचाराध्यायो दशमः १० अथ ग्रहयोगाध्यायः चक्रस्यार्द्धे प्राचि
पश्चात्क्रमेणाक्रूराक्रूरैश्चक्रमित्यामनंति अत्रोढायाः सुभ्रुवः स्वैरिणीत्वे भ्राम्यत्युच्चैश्चक्रवृत्ति
१२ तवृत्तिः १

तियोगमामनंति मुनयः एतदुक्तं भवति दशमभावभागानारभ्य चतुर्थभावभागपर्यंतं चक्रस्य पूर्वा
र्द्धं चतुर्थभावभागानारभ्य दशमभावभागपर्यंतं पश्चिमार्द्धं तत्र चक्रस्य पूर्वार्धे यदा क्रूराग्रहाः पश्चिमार्धे सौम्यास्तदा
चक्रंनामयोगः स्यादिति अस्य फलमाह अत्रेति अत्र योगे ऊढायाः परिणीतायाः सुभ्रुवः सुष्ठु भ्रुवौ यस्याः सा सुभ्रूः त
स्याः योषितश्चित्तवृत्तिः मनोवृत्तिः स्वैरिणीत्वे पौंश्चल्य विषये चक्रवदुच्चैर्भ्राम्यति चतुर्थे स्वैरिणी प्रोक्ता पंचमं बंध
कीस्मृतेति स्मृतिः चतुर्थे चतुर्थे पुरुषोपभोगे पौंश्चल्य विषये तस्या मनोवृत्तिरतितरां चक्रवद्भ्रमतीत्यर्थः अयं

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

वि॰वृ॰ सर्वग्रहकृतोयोगः इनविलंबितानि तनुर्लग्नंनिमीलनमष्टमं तत्रगतैः क्रमेणाशुभाशुभैः लग्नस्थैः शुभैरष्टमस्थैः पापग्रहै अं॰
टी॰ रित्यर्थः अयंध्वजइतियोगः इहास्मिन्योगेकृतोद्वहनावधूः सगुणलाभवतीभवती कृतसुहृद्वहनंयस्याःसातथागुणैःसहव ११
५७ र्तमानःसगुणःसचासौलाभश्चसोस्यास्तीति सगुणलाभवतीपुनःकथंभूताइंगितैःस्वचेष्टितैःहावभावादिभिःप्रियमनोयमनो
न्मुखविभ्रमाप्रियस्यभर्तुर्मनःप्रियमनःतस्ययमनमाकर्षणंतत्रोन्मुखःविभ्रमोविलासोयस्याःसातथा विभ्रमोभ्रांतिर्हावयोरिति
विश्वः २ अखिलानिचतानिकेंद्राणिचतेषांसत्स्वायत्तेनथाटच् चतुर्ष्वपिकेंद्रेषुगतैःखलखेचरैःपापग्रहैः वापिनामयोगोभ

तनुनिमीलनगैश्चशुभाशुभैर्ध्वजइतीहकृतोद्वहनावधूः सगुणलाभवतीभवतींगितैः प्रियमनोयमनो
न्मुखविभ्रमा २ अखिलकेंद्रसखैःखलखेचरैर्भवतिवापिरिहार्पितपुंस्करा युवतिरुज्झितकांतगृहा
गृहेजनयितुःकुरुतेकुरुतोत्सवान् ३ ॥

वति इहास्मिन्योगे अर्पितपुंस्करा अर्पितोदत्तःपुंसेवरायकरोययासा
परिणीतेत्यर्थः युवतिःस्त्रीउज्झितकांतगृहासती उज्झितंत्यक्तंकांतगृहंभर्तृगृहंययासातथाजनयितुःपितुर्गृहेकुरुतोत्सवान्कु
रुते कुत्सितानिरुतानिकुरुतानिकुशब्दाःतेषामुत्सवाआनंदाः ३ गगनंदशमंतोयंचतुर्थंतपोनवमंतेषुयथातथास्थितैःशुभग्र राम॰
हैः शंखसंज्ञंयोगंभृगुमुनिर्गदति असौयोगः अग्राम्यसुखस्खलयतिश्रमिव भ्रांतिनिराकरोतीत्यर्थः केनपरिणयेनकासांपयोरुह ५७
चक्षुषांपयोरुहेकमलेतद्वच्चक्षुर्यासांतासांतथानासांस्त्रीणांकथंभूतानांधनयशोनयशोभितनुश्रियां धनंचयशश्चनयश्चतैःशो

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

भनेसा धनयशोनयशोभिनी तनोर्वपुषः श्रीः कांतिः तनुश्रीर्धनादिशोभिनी तनुश्रीर्यासांतास्तथा ४ वसंततिलका सकादशे कुजरवीसपत्ने शत्रौ षष्ठे रविजः शनिः वित्ते धने विधुः तपसि नवमे शोषनभश्वराः कुजरविशनिचंद्रव्यतिरिक्ताश्चेत्स्युः तदा श्रीवत्सोनाम योगाः एष योगः रूपेण वर्जिता रूपवर्जिता सौंदर्यहीना तामपि स्त्रियं सुखयति कथं भूता सौभाग्येति सौभाग्यस्य भोगः तस्य भरो भारः तस्य भंगिः रचना तया तरंगिता नितरंगा जाताः येषु तानि तरंगितानि तानि अंगानि यस्याः सा तया ५ शालि। नी मूर्तौ लग्ने सौम्याः स्वांत्यराश्योर्द्वितीयद्वादशयोर्यातया असौम्याः पापाः कार्मुकनाम योगं कुर्युः अस्मिन् योगे परिणीता कन्य

गगनतोयनयस्सुसुभैर्भृगुर्गुरुर्दतिशंखमशंखखलयत्यसौ धनयशोनयशोभितनुश्रियां परिणायेनय
योरुहचक्षुषां ४ सकादशेकुजरवीरविजः सपत्ने वित्ते विधुस्तपसि शोषनभश्वराश्चेत् श्रीवत्सए
षसुखयत्यपि रूपवर्जितां सौभाग्यभोगभरभंगितरंगिताङ्गीं ५ सौम्या मूर्तौ स्वांतराश्योरसौम्याः कुर्युर्योगं
कार्मुकं कन्यकास्मिन् हत्वा कांतं कांतवेषा विषाद्यैर्वेश्यारामं रंरमीति स्वरन्त्या ६॥१९

का कांतवेषासनीवे श्यारामं रंरमीति अतिशयेन रमत इति रंरमीति यङ्लुकि वेश्याः रमयंतीति वेश्यारामः वेश्योपभोगः तमप्येषा अतिशयेन रमयतीति कया स्वरत्यानिजोपभोगकौशलेन किं कृत्वा विषाद्यैः विषशस्त्रादिधनादिभिः कांतं भर्तारं हत्वा ६ सूनौ पंचमेसुकः दुश्चिक्ये तृतीये सांगिराः सगुरुः गौररश्मिश्चंद्रस्तदांगनाभ्युद्गमश्चेत्स्यात् अंगनाया अभ्युद्गमोभ्युदयः विवाह इति।

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

वि॰ रं॰ यावत् यद्वा अंगनाभ्युद्गमः कन्यालग्नं तदाये आनंदो नामयोगः तेनयोगेन सुंदरीसांद्रसौख्यासांद्रं निविडं सौख्यंयस्याः अं॰
टी॰ सा तथा वंशयोःपितृभर्तृवंशयोरानंदं विलक्षणानि विस्तारयति राजंतभावः ७ वृश्चिकतयापि ३ व्ययोद्वादशः रिपुः षष्ठः ११
५८ हिबुकं चतुर्थं एषुवक्रो भौमः शुक्रः प्रसिद्धः ज्ञमपि सुतः शनिः एभिः क्रमशः स्थितैः एषकुठारो नामयोगः स्यात् इहा
स्मिन्कुठारयोगे परिणीता विटपटले भंडसमूहे विहरति क्रीडते कथंभूता संहृत्तो मारितः स्ववंशोयया सा तथा पटेव
घ स्त्रांचलं लेखितः अभिसारो यस्याः सा तथा असंशयं मतिसारिणीत्यर्थः कांतार्थिनीयानुयायातिसंकेतं साभिसारिकेति

सूनौ शुक्रः सांगिरा गोरविभिर्दैश्चिक्ये स्यादंगनाभ्युद्गमश्चेत् आनंदो यं सुंदरी सांद्रसौख्या तेनानंदं वं
शायोर्विलक्षणानि ७ व्ययरिपुहिबुकेषु वक्रशुक्रज्ञमणिसुतैः क्रमशः कुठार एषः इह विहरति संहृ
तस्ववंशा विटपटले पटलेखिताभिसारा ८ रविकविरविजेंदुभिः क्रमेणव्ययधनषष्ठनिधनेषु कूर्मे ॥९॥ एषः

अभिधानात् यद्वा अभिचारेति पाठः अभिचारो व्यभिचारो तत्पाठे व्यभिचारिणीत्यर्थः ८ रविः सूर्यः कविः शु
क्रः रविजः शनिः इंदुश्चंद्रः एभिर्ग्रहैः व्ययो द्वादशं धनं द्वितीयं षष्ठं षष्ठं निधनमष्टमं एषु यथाक्रमं स्थितैः एषः कूर्मो राम॰
नामयोगः इहास्मिन्योगे विहितः कृतः करग्रहो यस्याः सा तथा परः शतानि गृहाणि भ्रमति शतेभ्यः परा अपि परः शता ५८
नि पारस्करादित्वात् सुट् यद्वा परःशब्दो निपात इति भोजराजः शतेभ्यो अधिकानीत्यर्थः कया हेतुभूतया भुजिष्य

Digitized by Sarayu Trust Foundation Delhi and eGangotri.
CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

नयादोषत्वेनभुजिष्यायाभावोभुजिष्यता त्वतलोर्गुणवचनस्येति पुंवद्भावः नियोज्यकिंकरप्रेष्यभुजिष्यपरिचारकाइत्यमरः ९
भवः एकादशं परिभवः षष्ठं विक्रमस्तृतीयं एभिः स्थानैः द्युमणिः सूर्यः महीसुतो भौमः सूर्यस्यापत्यं सौरिः शनिः तैर्यथाक्रमं सनाथे
युक्तेः कृत्वा दलेंदुरर्धचंद्रो नाम योगः परिणमति परिपाकं प्राप्नोति किंकरिष्यन् इंदुमुख्याश्चंद्रवदनायाः स्त्रियः कुलयुगलोद्धृ
ति धूर्यतां विधास्यन् करिष्यन् कुलयुगलं पितृकुलं भर्तृकुलं चेति तस्योद्धृतिरुद्धरणं धुरं वहतीत्यर्थः औपछंदसिकं १० व्य

इहविहितकरग्रहा गृहाणि भ्रमति भुजिष्यतया परः शतानि ९ भवपरिभवविक्रमैः क्रमेणाद्युम
णिमहीसुतसौरिभिः सनाथैः परिणमति दलेंदुरिंदुमुख्याः कुलयुगलोद्धृतिधूर्यतां विधास्यन् १०
व्ययनिधनतनूषु मंदचंद्रारुणकिरणैर्मुसलं जगुर्मुनींद्राः इहचवृष्णिकुलांतके कुमारी कुलमारी न च
कापि कार्यसिद्धिः ११

व्ययो द्वादशं निधनमष्टमं तनुर्लग्नं स्त्रियां मूर्तिस्तनूस्तनुरित्यमरः तेषु यथाक्रमं मंदः शनिः चंद्रः प्रसि॰
द्धः अरुणकिरणः सूर्यः तैः स्थितैः कृत्वा मुसलं तेन नाम योगं मुनींद्रा जगुः इहास्मिन् वृष्णिकुलांतके योगे वृष्णयो यादवाः तेषां
कुलं तस्यांतकं संहारकं मुशलमित्यर्थः क्रीडद्भिर्यादवैः शांबजठरे यद्दृष्टितं मुसलं तेन मुसलेन यादवा विनष्टा इति भागव॰
तादौ प्रसिद्धं अस्मिन्मुसले योगे कुमारीकुलनाशिनी भवति न च कापि कार्यसिद्धिर्भवति केवलं कुलनाशिन्येवेत्यर्थः
॥११ पुष्पिताग्रं तनुर्लग्नं नवनवमं भवएकादशं तेषु गतैः यथाक्रमं बुधः प्रसिद्धः विबुधार्चितो गुरुः पंगुः शनिः एभिः

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.



कल्याणगजोनामयोगः स्यात् इहास्मिन्योगेयुवतिः स्त्री अहंकृताहंकारं मासासनीकृतानिष्यादिना अनेअर्थोअनान्वितर 
निदसानि वाङ्मयथवायुवतिः दैवतदैवतत्परा स्यात् दैवतानिचदैवंचदैवतदेवानितेषुतत्परादेवार्चनरताभाग्यरताचेत्य 
र्थः भाग्यवतीनियावत् १२ इतिश्रीसकलागमाचार्यवर्यश्रीकेशवदैवज्ञसुतगणेशविरचितायांविवाहवृंदावनटी
कायांविवाहदीपिकायांग्रहयोगाध्याय एकादशः ११ पूर्वमरिपराक्रमेन्यादिनासाधारण्येनग्रहफलान्युक्तानि अ
धुनामतिस्थानेतानिसविशेषाण्याह तत्रादौलग्नस्थग्रहाणांफलानि शिखरिणीमूर्तौलग्नेस्थितोजीवः मृगदृशस्त्व

तनुनवभवगैः क्रमेणायोगोबुधविबुधार्चितपंगुभिर्गजः स्यात् इहयुवतिरहंकृताकृतार्थान्वितरति
दैवतदैवतत्परावा १२ इतिविवाहवृंदावनेग्रहयोगाध्याय एकादशः ११ अथग्रहाणांभावकुंड
लिकाध्यायः चिरंजीवांजीवः कविरविरलानंगसुभगांशशांकोर्वीपुत्रौयमयुवतिपार्श्वप्रणयिनीं

यंचिरंजीवांसृजतिचिरंजीवतीतिचिरंजीवाचिरमित्यव्ययंविभक्तिप्रतिरूपकंकविः शुक्रः अविरलानंगसुभगांसृज
ति अविरलोनिविडश्चासौअनंगश्च अनंगोमदनः तेनसुभगासौभाग्यवती शशांकश्चंद्रः उर्वीपुत्रोभौमस्तौयमयुवति 
पार्श्वप्रणयिनींसृजतः यमस्ययुवतिः तस्याः पार्श्वसामीप्यंतत्रप्रणयः प्रीतिरस्ति अस्याः सातथा तांयमलोकका 
ङ्क्षिणीमित्यर्थः बुधोभर्तुः भक्तांसृजति शनिरपि अशीलांदुश्शीलांनयीमूर्तिः सूर्यः शिखिवाग्निः शस्त्रप्रसिद्धेने।

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

आदिर्येषांतानिशिखिशस्त्रादीनितेभ्योनि धनंयस्याःसातथातां १ अथ धनभावस्य स्त्रीवृत्तं धने द्वितीयभावे स्थि
ताः सितसितांशुजीवेंदुजाः नितांतधनिनीं जनयंति सितः शुक्रः सितांशुश्चंद्रः जीवोगुरुः इंदुजोबुधः नितांतः धनं
तदस्त्यस्याः सा तथा धरानंदनोभौमः रुजा दहनदस्युभिर्विधुरितां जनयंति रुजारोगः दाघश्चैवहलनानामिति दाप
दहनोग्निः दस्यवश्चौराः सर्पादयोवा विधुराविमुक्ता भार्तृहीना तस्याभावो विधुरता वैधव्यं पुंस्त्वं पूर्ववत् अर्का
त्मजः शनिः सुतेषु पुत्रेष्वपि विषयेमितं पचांमलिनमूर्तिं जनयतिमितं पचतीति मितंपचा कृपणा मितंन स्वेश लि

तु धोभर्तुर्भक्तांमृगदृशमशीलांशनिरपित्रपीमूर्तिं मूर्तौस्तजतिशिखिशस्त्रादिनि धने १ नितां
तं धनिनीं धने सितसितांशुजीवेंदुजारुजादहनदस्युभिर्विधुरितां धरानंदनः सुतेष्वपिमि
तंपचांमलिनमूर्तिं मर्कात्मजः स्त्रियंसहजदुर्भगांजनयतिद्युतीनांपतिः २ ११ त्वात्मम मलिना

मूर्तिर्यस्याः सा तथाद्युतीनांपतिः सूर्यः सहजदुर्भगांजनयति सहजातं सहजं स्वाभाविकं दुर्भगं अदैवं यस्याः सातथ
यद्वा सहजे सोदरवि षयेदुर्भगो यस्याः सा तथा २ अथ तृतीयस्य द्रुतविलंबितं सहजेतृतीयभावे द्रुतशनीरविश
नीवधूं सधनांधनसहितांकुरुतः सचिवः शक्रसचिवो बृहस्पतिः नेतु धनां करोतिनेतु रुशां धनं यस्याः सातथा श
शीचंद्रः सुभगांसुष्टुभगो भाग्यं यस्याः सातथा कुजसोमजौ भौमबुधौ सुकृतिनीं कुरुतः सुकृतं पुण्यं तदस्त्यस्याः सा

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰ टं॰ टी॰ ६० तथादेवारिपूपनीः शुक्राः देवारिदेवैरेनयन्ति प्रापयन्ति देवरगामिनीत्यर्थः देवानां रिपवो दैत्याः तानुपनयन्ते सौ देवारिपूपनी अ॰ १२
दैत्यगुरुः देवइतिकः काव्योनः समौ तु देवदेवराविन्यभिधानात् ३ अथ चतुर्थस्य प्रहर्षिणी सुखेचतुर्थभावे रविः दारि
द्र्यंसृजति अवनीसुतो भौमः वरांगव्याघातेन वरांगं शिरः तस्य व्याघातो भंगः गुरुभृगुजेंदुजाः प्रभुत्वं सृजंति गुरु
र्बृहस्पतिः भृगुजः शुक्रः इंदुजो बुधः प्रभुत्वं स्वामित्वं अब्जश्चंद्रमाः वाल्ये बालत्वे प्रियवियुतिं भर्तृवियोगं शनिः
स्तनाभः शून्यत्वं स्तनयोरभः स्तनाभः स्तन्यदुग्धं तस्य शून्यत्वं अभावे सृजति कासां सुवासिनीनां पौढांगनानां चि

द्रनशनीसहजे सधनावधूतनुधनासन्विवः सुभगां शशी सुकृतिनीं कुरुतः कुजसौम्यजौ न
यति दिवारिदेवारिपूपनिः ३ दारिद्र्यं रविरवनीसुतो वरांगव्याघातं गुरुभृगुजेंदुजाः प्रभुत्वं वाल्ये
ऽब्जः प्रियवियुतिं शनिस्तनाभः शून्यत्वं सृजति सुखे सुवासिनीनां ४ सन्तुत्राम सुरसुरेज्यसौम्यपु
त्रारिं रविरसुतं प्रजा द्विजेंद्रः शोकार्तामवनिसुतः सुतस्य सैनिः संताने सततकृजं सृजेत्कुमारी

रंडीतु सुवासिनीत्यमरः ४ अथ पंचमस्य प्रहर्षिणी असुराश्च सुराश्च असुरसुराः तेषामिज्यौ शुक्रगुरू सौमपुत्रो बुधः राम॰
सन्ते सुतं तस्याः पंचमभावस्थिताः कुमारीं सत्पुत्रां सृजेयुः कुर्युः रविः पुत्रारिं सृजेत् पुत्राणामरिः पुत्रघातिनी द्विजेंद्र ६०
श्चंद्रो सुतप्रजां सुते भ्योन्याश्च सुतासा प्रजा यस्याः सा तथा कन्याप्रसूः अवनिसुतो भौमः शोकार्तां शोकेनकृतार्पी

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

डितां शौनिः इनस्यापत्यं शौनिः संज्ञाने संज्ञति विषये सततरुजं सततं नित्यं रुक् रोगो यस्याः सा तथा तां सृजेत् ५ अथष
ष्ठे पृथ्वीवृत्तं वैरिगः षष्ठभावगः विधुः चारुभ्रुवां चारू भ्रुवौ यासां ताः तासां स्त्रीणां निधनं व्यनक्ति प्रकटयति दद्दा
तीत्यर्थः इंदुजो बुधः परभयं शत्रुभयं भानुमान् भानवो रश्मयः संत्यस्या सौ तथा सूर्यः जयं कुजो भौमः कुशलं क्षे
मं अर्काङ्घ्रिवर्तीत्यर्कभूः शनिः विगतवैरतां विगतं वैरं यस्याः सा विगतवैरा तस्या भावो विगतवैरता शत्रुवत्सुल्ल
उशना शुक्रः सहचरेण मित्रा समं सार्द्धं रिपुत्वं शत्रुत्वं सहचरतीति सहचरः वचसां पतिर्बृहस्पतिः भर्त्तारं अजा

विधुर्निधनमिंदुजः परभयं जयं भानुमान्कुजः कुशलमर्कभूर्विगतवैरतां वैरगः रिपुत्वमुशना सहं
सहचरेण चारुभ्रुवा व्यनक्ति वचसां पतिः पतिमजातशत्रुश्रुतिं ६ बुधो वंध्यामिंदुः परिचितस
पत्नीपरिभवां गलद्गर्भां पंगुः परनररतां दानवगुरुः अवीरां मर्त्यलोके गुरुरमरसेव्यो व्यसनिनीं विवा
हे माहेयः स्त्रियमतिरजस्कां जनयति ७ ॥

तशत्रुश्रुतिं व्यनक्ति शत्रूणां श्रुतिः श्रवणं अजाता शत्रुश्रुतिर्
यस्या सौ तथा शत्रुरिति श्रवणमपि नास्तीत्यर्थः ६ अथ सप्तमे शिखरिणी विवाहे विवाहकाले अस्ते सप्तमभावे स्थि
तो बुधः स्त्रियं वंध्यां जनयति इंदुश्चंद्रः परिचितसपत्नीपरिभवां सपत्न्याः सवधी परिभवः पराभवः सपत्नीपरिभवः
परिचितः परिरूढः सपत्नीपरिभवो यस्याः सा तथा पंगुः शनिः गलद्गर्भां गलंतः स्रवंतः गर्भा यस्याः सा तथा दान

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰वं॰ वगुरुः शुक्रः परनरतां परपुरुषगामिनीं अर्कः सूर्यः अवीरां नास्तिवीरोभर्त्ता यस्याः सा तया गुरुः असमरसेवाव्यसनिनीं अम अ॰
टी॰ रसेवायां व्यसनं विद्यते यस्याः सा तया माहेयो भौमः अतिरजस्कां जनयति अतिशयितं रजो यस्याः सा तया मदरव्याधियुक्ता १२
६१ मित्यर्थः ७ अथाष्टमे मालिनी मृत्युवेश्मनि अष्टमभावे सितासितकिरणे ज्याः द्रुहिणगृहसुखीनां स्त्रीणां मरणाय भवंति
सितश्शुक्रः सितकिरणश्चंद्रः ईज्यो गुरुः द्रुहिणो ब्रह्मा तस्य गृहं पञ्जन्तद्वत्सुखं यासां तास्तया सूर्यसौरीत्रिशनी अन
वरतसुखायुः संपदे भवतः सुखंच आयुश्च संपच्च सुखायुः संपत् इहैकत्वं क्लीवत्वंच अनवरतमखंडि तंचतत्सु।

सितासितकिरणेज्या मृत्युवेश्मन्यनवरतसुखायुः संपदे सूर्यसौरी भवति पतिशरीरद्रोहकृद्रौहिणेयो द्रुहि
णगृहसुखीनां यस्मरो स्मोरिजन्मा ८ शशिसुतगुरुशुक्राः सांद्रसौभाग्यलीलां सरलहसितकांतस्वांतके।

खायुः संपत्तस्मै रौहिण्या अपत्यं रौहिणेयो बुधः पतिशरीरद्रोहकृत स्यात् पत्युः शरीरं तस्य द्रोहः अप लिं कुमारीं॥
घातः तं करोतीति तथा स्मोरिजन्मा भौमः यस्मरोव्याधेर्यभवेत् ८ अथ नवमे मालिनी तपसि नवमभावे शशिसुतगुरुशु
क्राः कुमारीं सांद्रसौभाग्यलीलां सरलहसितकांतस्वांतकेलिं कुर्वंति शशिसुतो बुधः गुरुः शुक्रौ प्रसिद्धौ सांद्रं निविडं च त सम॰
त्सौभाग्यं च तस्य लीला यस्याः सा तथा सरलं ऋजु तच्च तद्धसितं च तत्तथा कांतस्य भर्त्तुः स्वांतं मनः कांतस्वांतं सरलहसिते ६१
न कांतस्वांते केलिः क्रीडा यस्य संबंधेन सा तथा रविरविसुतवक्राः केनवाकांतशीलां कुर्वंति रविः सूर्यः रविसुतः शनिः

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वक्रोभौमः कैतवं कपटंतेनआक्रांतंयुक्तंशीलंयस्याः सातथातुहिनरश्मिश्चंद्रः स्त्रीसवित्रींकरोतिसूतेसासवित्री स्त्रीणां सवित्रीकन्याप्रसूः ९ अथदशमेमालिनी व्योम्निदशमभावेशनिः कन्दकांअनियमशौचांरचयतिकरोति नियमेनरहितंशौचंयस्याः सातथाशुचित्वहीनामित्यर्थः विधुश्चंद्र अन्यकार्यैः परकर्मभिः अतिविधुरांगींरचयति अतिशयितंविधुराणिविकलानिअंगानियस्याः सातथावक्रोभौमः शाकिनींडाकिनींक्षुद्रदेवताविशेषः शाकिनीवशाकिनी. मांसभक्षिकेत्यर्थः रविः सूर्य उग्रांअश्लीलांकोविदोबुधः कार्मणज्ञांकार्मणंसुतकर्मविशेषः तज्जानातीतितथा आर्यश्शुक्रौगुरुश्शुक्रौ अविकृतसुकृ

रविरविसुतवक्राः कैतवाक्रांतशीलांतपसितुहिनरश्मिः स्त्रीसवित्रींकरोति ९ शनिरनियमशौचांकन्यकां
मन्यकार्यैर्विधुरतिविधुरांगींशाकिनींव्योम्निवक्रः रचयतिरविरुग्रांकोविदः कार्मणज्ञामविकृत सुकृतश्री
मालिनीमार्यशुक्रौ १० एकादशेदशशतांशुसुखाः सुखानिरत्नांबरद्रविणभोगभरोन्नसुखानि ॥ ६ ॥

तश्रीमालिनींरचयतः सुकृतंचश्रीश्चसुकृतश्रियौपुण्यलक्ष्म्यौ अविकृते पूर्णेचतेसुकृतश्रियौचताभ्यांमालतेशोभते सातथा अत्रमालिनीतिछंदसोपिनामसूचितं १० वसंततिलकादीर्घदृग्लोचनयासांतास्तासांस्त्रीणांपाणिग्रहेएकादशेस्थानेदशशतांशुसुखादशशतानि अंशवः किरणायस्यासौ तथासःसुखमादिर्येषांतेसूर्यादयोग्रहाः रत्नांबरद्रविणभोगभरोन्नसुखानिसुखानिददतिरत्नानिच अंबराणिचद्रविणांचतेषांभोगः तस्याभरोभारः तस्मादुन्न

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

 रवानिउदिनानि अथश्लोकावशेषेसति अत्रैवग्रहाणांभावफलेषुबलप्राशस्त्यमाह सर्वेपीति सर्वेपिग्रहाअबलाः 
स्थानादिबलहीनाः संतः सर्वभवनेषुलग्नादिसर्वभावेष्वपिकिंचिच्छुभमशुभंवानेदद्युः अर्थादेतत्फलमुक्तंतत्स
बलानामेवेति ११ अथव्ययेरुचिरावृत्तं व्ययेद्वादशेस्थिताःशुभाःबुध गुरुशुक्राः स्त्रियंसद्रूपकर्षितांरचयंतिकु
र्वंतिसंश्चासौव्ययश्चतेनकर्षितांकृशांत्वप्राप्तानांशनिःसुराहुर्चिंसुरायांरुचिर्यस्याःसातथादुष्टाविधायस्यासातांविधु
श्चंद्रःदुर्विधांविधानंविधादुर्विधांदुष्टकर्मांकुजोभौमः अदक्षिणावयवरुजं अदक्षिणश्चासाववयवश्चतस्यरुग्रो

पाणिग्रहेदशतिदीर्घदृशांगृहेंद्राः सर्वेपिसर्वभवनेष्वबलानकिंचित् ११ व्ययेशुभाःसद्रूपकर्षितां
शनिःसुराहुर्चिरचयंतिदुर्विधांविधुश्च अदक्षिणावयवरुजंकुजोरविर्विरूपयत्यतिरुचिरामपि
स्त्रियं १२ इतिमुनिजनमतमतनुवितर्के पाणिगृहचरखेचरोदृढदृक्पतिविगुणाष्वविशेषमशेषं
फलमिदमशेषमनुज्झितरेखं १३

गोयस्याःसातथावामांगव्याधितां रविरतिरुचिरा अतिसुंदरामपिस्त्रियं
विरूपयति विरूपांकरोति रुचिरेतिछंदसोपिनाम १२ अथैषांभावफलादीनांप्राशस्त्यमाह इत्यनेनतरोक्तं इदं 
लग्नादिभावस्थितग्रहाणांफलमशेषंसमस्तमनुज्झितरेखंभवेत् नउज्झिताअनुज्झितारेखायेनतत्तथा अत्यंतमर्या 
दंयथावद्भवतीत्यर्थः कथंभूतंमुनिजनमतंमुनिजनानांसमतं अतनुः एधुः वितर्कोयस्यतत्तथा यद्यप्युक्तानार्थमे

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वदृश्यते तथापि ग्रहबलादिविचारवशाद्बहुवितर्कमित्यर्थः पुनः कथंभूतं प्रतिगृहेति गृहं गृहं प्रति प्रतिगृहं प्रति
गृहं चरन्ति ते प्रतिगृहचराः ते च ते खचराश्च तेभ्य उदेति उद्भवतीति प्रतिगृहचरखेचरोद्यत् सउदर्कः उत्तरकाली
नं शुभाशुभफलं यस्मिन् तत्तथा किं कृत्वा अशेषं परिविगणय्य प्रागुक्तं समस्तविशेषबलाबलरूपं विचार्य
इत्यर्थः ९३ इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशविरचितायां विवाहवृंदावनटीकायां
विवाहदीपिकायां ग्रहाणां भावकुंडलिकाध्यायो द्वादशः १२ ॥ अथोक्तभावफलानां व्यवहारार्थमुपसंहा ।

इति विवाहवृंदावने ग्रहाणां भावकुंडलिकाध्यायो द्वादशः १२ अथ ग्रहयोगादिबलाबलाध्यायः
षट्त्र्यायेष्वशुभाः शुभाय निधनद्यूनांत्यवर्ज्यं परेत्र्यायार्थेषु शशी मृतौ शनिरवी भंगाय तत्रापरे

रादिकं तथान्यदपि शुभाशुभयोगादिकं बलादिकं च निरूपयन् ग्रहबलाध्यायमारभ्यते तत्रादौ भावफलोप
संहारादि शार्दूलविक्रीडितं षट् षष्ठं त्र्यस्तृतीयं आयं एकादशं एष्वशुभाः पापग्रहाः शुभाय भवंति शेषे
ष्वशुभाय निधने अष्टमे द्यूने सप्तमे अंत्ये द्वादशे एतानि वर्जयित्वान्येषु नवसु स्थानेषु परे सौम्यग्रहा बुधगुरुशु
क्राः शुभाय भवंति शेषेषु निधनद्यूनांत्येषु अशुभाय शशी चंद्रः त्र्यायार्थेषु तृतीयैकादशद्वितीयेषु शुभाय भ
वेत् शेषेष्वशुभाय तत्राष्टमे सर्वेषां विशेषमाह मृताविति मृतौ अष्टमे शनिरवी अशुभाय भवतः तत्वशुभाय अ

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

बि॰ सं॰ त्र रवेरुपलक्षणाद्राहुरप्यष्टमः शुभः तत्त्वस्थानरं केतुश्च राहुफलस्य रवेरतिदिष्टोक्तेः तत्राष्टमे स्थाने परे ये चंद्रभौमबुधगु- अ॰ ९३
टी॰ रुशुक्रा भंगाय भवंति लग्नभंगकर्तार इत्यर्थः अन्यानपि लग्नभंगानाह क्रूरद्यूनेति शशितनुक्रूरद्यूनवृत्तान्विते भंगाय भव-
६३ तः द्यूनवृत्तमावृत्तं यथोक्तं द्यूनवृत्ते द्यूनवृत्ते अन्विते च द्यूनवृत्तान्विते क्रूरग्रहैर्द्यूनवृत्तान्विते तेन तथा चंद्रस्य लग्नस्य वा सप्तमं क्रूराक्रांतं भवेत् यद्वा चंद्रो लग्नं वा क्रूरान्वितं भवेत्तदा लग्नभंगः स्यादित्यर्थः अंशेसु समेलग्नाद्वा चंद्राद्वा सितज्ञौ शुक्रबुधौ वा सोपि भंगाय लग्ने विधुश्चंद्रः भंगाय हि द्विषष्ठे सोमसिताधिपाः भंगाय स्युः सोमश्चंद्रः सितः शुक्रः अधिपाः स्वामिनः लग्नां-

क्रूरद्यूनवृत्तान्विते शशितनू अस्ते सितज्ञौ विधुर्लग्ने सोमसिताधिपा द्विषसितः सेंदुर्विनष्टांशपः १॥
अन्त्यर्क्षकायकेंद्रगः सुहृत्स्वसौम्यवर्गयुक् सुहृच्छुभेक्षितः शुभः शशी मयूखमांसलः २॥ ६॥

शद्रेष्काणानां अत्र षष्ठं लग्नादेव न तु चंद्रात् सोमग्रहणात् सितः शुक्रः सेंदुः सचंद्रः भंगाय शुक्रयुक्तः चंद्र इत्यर्थः अंश-योनवांशाधीशो विनष्टोऽस्तंगतो भंगाय स्यात् १ अथ स समदशमचंद्रस्य विशेषमाह ममापि कान्त्यर्क्ष चतुर्थ कायो लग्नं ता-भ्यामन्यानि अन्त्यर्क्षकायानि तानि च तानि केंद्राणि च तत्र गतः स समदशमग इत्यर्थः शशी शुभः स्यात् कथंभूतः सुहृदित्यादि राम॰ ६३
सुहृच्च स्वश्च सौम्यश्च तेषां वर्गः तेन युनक्तीति तथा सुहृद्वर्गगः स्ववर्गगः सौम्यवर्गगो वेत्यर्थः सुहृच्च शुभश्च ताभ्यामीक्षि-तः सुहृद्दृष्टः शुभदृष्टश्चेति बहुमांसमस्य सो मांसलः सिध्मादिभ्यश्चेति मत्वर्थीयो लः मयूखैः किरणैर्मांसलः रश्मि-

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

भिः पुरुइत्यर्थः सप्तमदशमोपि चंद्रस्य एवं विधः शुभः स्यादिति भावः अत्रापि अकायकोणकेंद्रेति यावः तत्र अकायकोणकेंद्राणि चतुर्थसप्तमदशमनवमपंचमानि तथा च शौनकः त्रिकोणसप्तमांबरव्ययोपगो विलग्नतो हिमद्युतिः शुभर्क्षगः शुभेक्षितश्च शोभन इति अत्र व्ययस्यापि गृहीतः स तु नारदेन महादोषेषु पठितो ऽतो सौम्ये यत्कृतान्यत्कः २ अथ शुभयोगानाह मालिनी नव पात इति प्रत्येकं संबध्यते शशितनयो बुधः सितः शुक्रस्ताभ्यामनुगताभ्यां क्रमेण नंदभद्रौ योगौ स्तः बुधेन लग्नगतेन नंदः शुक्रेण भद्र इति उभाभ्यां लग्नगताभ्यां जय इति योगः जीवे गुरौ तनुयाते जीव इति योगः असुरसुराणां गुरू शुक्रगुरू ताभ्यां तनुया

शशितनयसिताभ्यां नंदभद्रावुभाभ्यां जय इति तनुयाते जीव इत्येष जीवे असुरसुरगुरुभ्यां स्था
वरोज्ज्यशुक्रैर्विजय इति विशुक्रैर्जीमूतमाहुः ३ इति शुभफलयोगाः सप्तसप्तर्षिमुख्यैर्मुनिभिरभि
हितास्ते जन्मयात्रास्वपि स्युः

ताभ्यां स्थावर इति योगः ज्ञेज्यशुक्रैः बुधगुरुशुक्रैस्तनुयातैर्विजय इति योगः तमेव योगं विशुक्रं शुक्रवर्जितं बुधगुरुभ्यां लग्नगताभ्यामित्यर्थः जीमूतनामयोगमाहुर्मुनयः ३ अथैषां फलमाह मालिनी इति सप्त शुभफलयोगाः सप्तर्षिमुख्यैर्मुनीश्वरैरभिहितास्ते योगाः जन्मयात्रास्वपि स्युः न केवलं विवाहे किंतु जन्मकाले यात्राकाले च शुभफलदा इत्यर्थः तत्किं शुभफलं इत्याह भजतीति एभिर्योगैर्युवतिः भूपसीमंतिनीत्वं भजति भूपस्य सीमंतिनी तस्या भावस्तत्त्वं या नारी सीमंतिनी वधूरित्यमरः राजपत्नी भवतीत्ययमर्थः अस्मिन् शुभफले ग्रहयुतिबलयोगाद्युत्तराधर्यं स्यात् ग्रहाणां युतियोगः तत्र बलयोगः

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰ टी॰ ६४ सबलत्वंतस्मात् उत्तरं च अधरं च उत्तराधरे तयोर्भावः उत्तराधर्यं योगकर्तृग्रहाणां बलवशाच्छुभफलस्याधिक्यं न्यूनत्वं अ॰
च कल्प्यमिति भावः ४ अथाशुभयोगानाह मालिनी तनोर्गृहं ततु गृहं तेन युतः क्रीति ततु गृहयुक् तस्मिन् लग्नगते १३
त्यर्थः एतत्तन्यत्येकं संबध्यते दिनकररुधिराभ्यां लग्नगताभ्यां क्रमेण व्यालपातालयोगौ स्तः रविणा लग्नगतेन
व्यालो भौमेन पातालवक्रूर इति रविपुत्रे शनौ लग्नगते क्षयइतियोगः सैंहिकेये राहौ लग्नगते तमस्क इति योगः केतौ लग्नग
ते ध्वांतक इति योगः एवं पंचैतेषु योगेषु पंकजाक्षी नारी शोकव्यसननिधनताभिः तप्यते कर्मकर्तरि रूपं निधनताभिरिति करणे

भजति युवतिरेभिर्भूपसीमंतिनीत्वं ग्रहयुतिबलयोगादुत्तराधर्यमस्मिन् ४ दिनकररुधिराभ्यां व्यालपाता
लवक्रौ क्षयइतिरविपुत्रे सैंहिकेये तमस्कं तनुगृहयुजिकेनावंतकस्तेषु शोकव्यसननिधनताभिस्तप्य

यद्वा कर्मणि रूपं तदा निधनताभिरिति कर्तरि एतत्प्रत्येकं फलं ५ अथान्ययोगद्वयमाह मा ((ते पंकजाक्षी ५
लिनी तनुलग्नं तु हिनमरीचिश्चंद्रः तयोर्लग्नचंद्रयोः चरगृहगतयोश्चरराशिस्थितयोः आधारे समी अंगनाखेटः
शुक्रः तस्य दृष्टौ सत्यां चरराशिस्थौ लग्नचंद्रौ शुक्रेण दृष्टावित्यर्थः चेद्यापि तो ग्रहा अविदिशि स्थिताः संतो बलिनः ताम॰
स्युः तदा कुमार्याः कांतसुखं भर्तृहृयं स्यात् एतदुक्तं भवति जातके प्राच्यादिषु जीवबुधावित्यादिना दिग्बलोन्यासेल ६७
ग्नं प्राच्यां भवति चतुर्थं सुदीच्यां सप्तमं प्रतीच्यां दशमं दक्षिण इति शिष्टान्येष्टौ तन्मध्यवर्तिषु चतसृषु विदिक्षु भ
र्यं २

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वंति कोणगताद्दिग्विदिगित्युच्यते तस्मा अन्या अविदिक् साद्दिगेव प्राच्यादिका तस्यां स्थिताः यायिनो ग्रहाः लग्ने चतुर्थे सप्तमे दशमे चेत्यर्थः यानुशीलयेयाते यायिनः स्यानुशीलयेयाते स्थापिनस्तस्मव पौराः उभयविलक्षणा आक्रंदः तेव राहुणोक्ताः रविराक्रंदसोमध्येपौरः पूर्वे परे स्थितो यायी पौरा बुधगुरुरविजा नित्यं शीतांशुराक्रंदः केतुकुजराहुस्व क्रायायिन इति अथयोगः शौनकस्तस्य सुक्रः लग्ने द्विचरराशौ केंद्रस्थायायिनो यदाबलिनः योषिद्वहस्तद्वस्यापति द्वयं गच्छतेनारीति अथद्वितीययोगमाह युग्म इंदाविति युग्मे समराशौ स्थिते इंदौ चंद्रे अशुभदृशापापदृष्टिसुपेते

नृनुतुहि नमरीच्योरंगनात्वेदृष्टौ च रगृहगतयोः स्यात्कांतयुग्मं कुमार्याः अविदिशिबलिनश्चेद्यायि...
नो युग्म इंदावशुभदृशासुपेते कन्यकान्यकाम्या ६ नरः प्रियो नीरजलोचनानां नरग्रहे रुत्कटकांतिवी

र्यासे पापग्रहदृष्टइत्यर्थः तदा कन्यका अन्यकाम्यास्यात् काम्यते तत्काम्यं अन्यस्य काम्यं यस्याः सा तया परपुरुषकांक्षिणीत्यर्थः तथा च शौनकः क्रूरग्रहसंदृष्टे समर्क्षगे शशिनि भजति पतिमन्यं स्त्रीणामन्यत्रगाते सौम्येदृष्टे शुभं भवतीति ६ अथग्रहविशेषेणफलवशात्फलान्तराण्याह उपजातिका नरग्रहैः पुरुषग्रहैः उत्कटकांतिवीर्यैः कांतिश्च वीर्यं च उत्कटे कांतिवीर्ये येषां तेन तथा अतिशयितप्रकाशैरतिबलैरित्यर्थः तदा नीरजलोचनानां स्त्रीणां नरो भर्ता प्रियः स्यात् नारीन भोगैः स्त्रीग्रहैर्बलशालिभिः बलेन शालंते शोभंते तैन बलशालिनः तदा नारी नृणां चित्तहरा प्रिया स्यात् कैः स्वभोगैः निजभोगकौशलैः

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰टी॰ पुरुषस्यनारीस्त्रियास्यादित्यर्थः बुधसूर्यसुतौनपुंसकाख्यौ शशिभृगुक्रौ युवतीनराश्च शेषाइति स्त्रीग्रहद्वित्वेसतिनारीनभो अ॰ १३
टी॰ गैरिति बहुत्वंकथमुपपद्यते उच्यते शौनकीयेपियोषिद्ग्रहैरिति बहुत्वमस्ति अतोस्यपूज्यार्थत्वादित्यादिगतिर्ध्येयम् किंच ७
६५ वैतालीयंसुसुहृद्यासाताः सुदृशः नासांस्त्रीणांपतिः अस्तपतिः ससमाधीशः स्यात् विरोचनः सूर्यः श्वशुरः मदग्रहः शुक्रस्तस्य
स्वसुस्सममदांबीश्वश्रूरित्यर्थः अमीपत्यादयः खचराः अबलानिर्बलाः बलिनः सबलाः क्रमात्सुदृशांस्त्रीणांतेषुपत्यादि
ष्वशुभमशुभंदिशंति ददति किंच ८ वैतालीयंकरग्रहे पाणिग्रहसमये शशिसूर्यसुतावनीसुतैः चंद्रशनिभौमैः यथात

नारीनृणांचित्तहरास्वभोगैर्नारीनभोगैर्बलशालिभिस्तु ७ पतिरस्तपतिर्विरोचनः श्वशुरस्तन्मम
दामदग्रहः अबलाबलिनोदिशंत्यमीसुदृशांतेष्वशुभंशुभेक्रमात् ८ शशिसूर्यसुतावनीसुते
रविनीचास्तगतैः करग्रहे अपितत्त्वधिपेनतप्यतेनिरपत्यानियतंनितंबिनी ९ ॥ ❀ ॥

यावस्थितैः रविनीचास्तगैः तैः अरिः शत्रुगृहं नीचगृहं अस्तमस्तमयः तत्रगतैः अपिः समुच्चये तत्त्वधिपेनापि अरि।
नीचास्तगतेन सर्वयोगेन नितंबिनी स्त्री निरपत्या अपत्यरहितासती नियतं निश्चितं तप्यते तापं प्राप्नोति अत्र सप्तम राम॰ ६५
भवने निर्बले सतीति प्रक्षेप्तव्यं तथाचशौनकः लग्नपतौरिपुभवने नीचेवारविसुतारजनीकरैः बलरहिते च द्यूने।
स्त्रीणांनभवंत्यपत्यानि अयंशास्त्रविरुद्धं किंचिल्लोकेस्तिनदुपहसति ९ उपजातिकातृतीयस्यकवेः भुजंगस्या।

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

रेखा शुभाय भवेत् लग्नस्य ग्रहबलाबलावलोकने गणनार्थं प्रतिग्रहमेकैका रेखा क्रियत इति ज्योतिर्विदां संप्रदायः तत्र तृतीयः शु
क्रः शुभ इति कृत्वा रेखा क्रियत इत्येका रीतिः नभस्थो दशमस्थो भौमः लग्नं न भनक्ति लग्नभंगकर्ता न भवेदित्यन्या रीतिः त
हृद्व्यये द्वादशे सौरिः शनिरपि लग्नं भनक्तीति तृतीया रीतिः इयं रीतिः पहुनिर्जनेषु कुतस्त्या जागर्ति नरा इयं रीतिः सर्वथा
निर्मूला लोकेषु कस्माद्धेतोर्जाता अतिप्रसिद्धास्तीति अस्यान कुत्रापि मूलं दृश्यत इत्यर्थः कुतो जाता कुतस्त्या अतिशयि
ता जागर्तीति जागर्ति नरां आख्याता तत्रैव आमूचनरं नमक्ष्यं १० अथ जामित्रदोषस्य भंगमाह वैतालीयं उशा

कवेस्तृतीयस्य शुभाय रेखा लग्नं नभस्थो न भनक्ति भौमः न हृद्व्यये सौरिरपीति रीतिर्जनेषु जागर्ति न
रीकुतस्त्या १० उशना गुरुरिंदुनंदनः शशिजामित्रगपापतापहृत् नवपंचमकेंद्रमित्रभप्रणयी पुष्ट
दृशा विधुं स्पृशन्

नाशुक्रः गुरुर्बृहस्पतिः इंदुनंदनो बुधः अयमेकोपि शशिजामित्रगपापतापहृत्स्यात् शशिनः
जामित्रं तत्र गच्छतीति तथा स चासौ पापश्च तस्य तापः अशुभं तं हरतीति तथा चंद्रात्सप्तमपापस्य दोषहर्ता भवती
त्यर्थः कथंभूतः नवपंचमे नवपंचानां पूरणे नवपंचमे ते च केंद्राणि च नवपंचमकेंद्राणि तत्र तन्मित्रभं तत्प्रणयोस्य
स्यासौ तथा नवपंचमकेंद्रगतः स्वमित्रगृहस्थित इत्यर्थः अपि च पुष्टदृशा विधुं स्पृशन् पूर्णदृष्ट्या चंद्रं पश्यन्नि
त्यर्थः अत्र केंद्रसप्तमाविरहिते ज्ञेयं अशुभत्वात् तथा चोक्तं हरिजदिवसचंद्रात्सप्तमक्रूरदोषक्षयकृदमरपूज्यः

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

वि॰टी॰ ६६ सोमसुतः सितो वा उदयति तु कधर्मव्योम पुत्रालमस्यो यदि च सकलदृश्यालोकयेच्छीनरश्मिमिति ११ तत्र परिपूर्ण अ॰
जामित्रदोषे अभंगत्वमाह वैतालीयं यदि हिमरश्मिनवांशकाच्चन्द्रस्थितनवांशकात्लवलवेदः शरसायकांशके १३
पंचपंचाशत्तमे नवमांशे भवति अयमुपसर्गडंवरः दोषाडंवरः निविडैः परिपूर्णैरयमन्यगुणैर्न हन्यते चेज्जामि
त्रगोपि पापः यदि षड्जात्तरे भवति तदायं दोषः केनापि गुणेन न भज्यत इत्यर्थः १२ अथैषां योगानां विचारगम्यत्वम
तीन्याह वैतालीयं केपि केचन शरीरधारिणः संपूर्णा अत्यसद्दृश्यमाना योगा निःफलाः स्युः किंचन शिखिद

हिमरश्मिनवांशकान्नवलोयदि खेदः शरसायकांशके अयमन्यगुणैर्न हन्यते निविडैरप्युपस
र्गडंवरः १२ मोघाः शिखिदग्धबीजवद्योगाः केपि शरीरधारिणः दृढगूढफलोदयाः परे परणौकी

ग्धबीजवत् शिखिना वह्निना दग्धं यद्बीजं तद्वत् यथा वह्निदग्धं बीजं अत्यसंपूर्णा ९ णहुताशराशिवत् १३॥
वयवमपि कार्यं समं न भवेत् तद्वत् केचिद्योगाः संपूर्णाः अत्यसद्दृश्यमाना अपि मोघाः स्युरित्यर्थः निर्बलानां ग्रहाणां संपूर्णा अ
पि योगाः मोघाः स्युरिति भावः परे केचन योगाः दृढगूढफलोदयाः संतः दृढगूढः आच्छन्नः फलोदयः फलप्राप्तिर्येषां तेन सम॰
था किंचन पर्णौकीर्णहुताशराशिवत् पर्णैः आकीर्णः आच्छन्नः आसौ हुताशराशिश्च तद्वत् यथा पर्णाच्छन्नो वह्निः ६६
मत्यल्पमदृश्यमानोपि स्वकार्यं समो करोत्येव तथा केचन योगा अपीत्यर्थः सबलानां ग्रहाणां अल्पयोगोपि परिपूर्णफल

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

Digitized by Sarayu Trust Foundation Delhi and eGangotri.

स्यादित्यर्थः १३ एवंविधविचारवतो दैवज्ञस्य जगत्सु पूज्यत्वं स्यादित्याह वैतालीयं सदैवेति सततं विदुषां अवतंसतां
प्राप्नोति अवतंसः कर्णपूरः तस्य भावस्तत्ता या सतामपि वंद्यः किमुतान्येषामिति सकः यदुक्तप्रकारेण प्रतिकूलका
रकग्रहभावांशनिवेशदृष्टिभिः कृत्वा तत्त्वादिफलेषु दत्तदृक् प्रतिकूलदृष्टं कुर्वन्निति प्रतिकूलकारकाः ते च ते ग्रहाः
श्च भावा अंशाश्च प्रतिकूलकारकग्रहभावांशास्तेषां निवेशाः स्थानं तत्र दृष्टयः ताभिः तत्त्वादीनां फलानि तेषु दत्ता
दृग्येन स तथा दुष्कारकाये ग्रहा भावाश्च अंशाश्च तेषां यानि स्थानानि तेषु दृष्टिं दत्त्वा तत्त्वादिफलेषु च दृष्टिं द

इति यः प्रतिकूलकारकग्रहभावांशनिवेशदृष्टिभिः तत्त्वादिफलेषु दत्तदृक् स प्राप्नोत्यवतंसतां
सतां १४ इति विवाहवृन्दावने ग्रहयोगादिबलाबलाध्यायस्त्रयोदशः १३ अथ मिश्राध्यायः उक्ते
ष्वसामुद्रिकलक्षणानि वरः कुमारीं वृणुयान्निमित्तैः एवं कुमारी वरमप्युदर्कं तद्युक्तधारं निरधी

त्वा तद्बलाबलं विचार्य यदादिष्टं तदन्यथा न स्यादिति कृत्वा सदैव विन्नसतां न ग्रहः स्यादित्यर्थः १५ इति श्री ॥रिधौरेः१
सकलागमाचार्यवर्य श्रीकेशवसांवत्सरात्मजगणेशविरचितायां विवाहवृन्दावनटीकायां विवाहदीपिकायां ग्रहयो
गादिबलाबलाध्यायस्त्रयोदशः १३ अथ स्त्रीपुंसयोः सामुद्रिकलक्षणपूर्वको मिश्राध्याय आरभ्यते तत्रादौ तत्कारणा
माह उपजातिका वरः कुमारीं वृणुयात् कैर्निमित्तैः यल्लिंगिबालकेत्यादिना वक्ष्यमाणैः किं कृत्वा सामुद्रिकलक्षणा।

CC0. In Public Domain Kirtikant Sharma Najafgarh Delhi Collection

निरुक्तिरथ्यप्रकटीकृत्य समुद्रेण प्रणीतानि सामुद्रिकाणि तानि लक्षणानि सामुद्रिकलक्षणानि सामुद्रिकानि स्त्रीपुंसयोः शुभाशुभलक्षणानां मुख्यप्रवर्तकः समुद्र एव यथा व्याकरणस्य पाणिनिः छन्दसश्च पिंगलः अनन्तानि सामुद्रिकलक्षणानीत्युच्यते कुमार्योः सामुद्रिकलक्षणैः प्रश्नकालनिमित्तादिभिश्च शुभं ज्ञात्वा तां वरयेदित्यर्थः एवं वरमपि कुमारी वरयेत् वरस्यापि शुभं ज्ञात्वा तं वरं कुमारी वृणुयादित्यर्थः एवं चेत्तर्हि भाग्येन फलसंदर्भे गतः किमित्याशंकायामाह उदर्कैरिति हि यस्मात्कारणात् उदर्कः उत्तरकालीनफलं धीरैर्गर्गादिभिरेकधा एकप्रकारं स्थिरं निश्चितं न निरधारि न निर्धारितं भावि फलमनेनैव प्रकारेणाज्ञेयमिति न निश्चितमिति भावः १ तदेव समर्थयंश्चमाह इंद्रवज्रा एवं स्वप्नादिकफलाद्याफलमार्गाः विविधो

स्वप्नो निमित्तं शकुनाः स्वकर्म शारीरमांगंतुकमङ्गनानि दोषाभिचारग्रहचारकालकाम्यानि चैवं विवि

नेकप्रकारोऽस्ति स्वप्नो निद्राविशेषजं ज्ञानं ननु स्यान्निद्राशयनं स्वापः स्वप्नः संवेश इत्यभिधाने ((धः फलाध्वा २ निद्रास्वप्नयोरभेदोऽस्ति सत्यं तथाप्यवान्तरविशेषाद्भेदोऽस्त्येव वनगहनवत् तथाहि जागृतिस्वप्नसुषुप्तितुरीया इत्यवस्थाचतुष्टयं योगशास्त्रे प्रसिद्धं तत्र जगतः प्रसिद्धा मनसो निरिंद्रियप्रदेशावस्थानं निद्रा सा द्विधा स्वप्नः सुषुप्तिरिति यत्र दुष्टान्तःकरणजं ज्ञानमस्ति सा स्वप्नः इत्युच्यते यत्र तु एतन्नास्ति सा सुषुप्तिः एतन्त्रितयं सर्वजनानुभवसिद्धं निस्तृष्णो पि लक्षणा सा तुरीया सा च योगिनामेव स्वप्नावस्थायां तद्गतं ज्ञानमपि स्वप्नशब्देनोपचर्यते यथा

